श्री श्री विष्णुतीर्थविरिचिता

# सन्न्यासपद्धतिः

प्रकाशकरु
वाणिविहार विद्यालय
सत्यध्यानविद्यापीठ
मुम्बई

SANYASA PADDHATI OF SRI VISHNU TEERTHA &
YOGA DEEPIKA OF NARAYANA PANDITACHARYA
EDITED BY VIDYASIMHACHARYA, KULAPATI,
SATYADHYANA VIDYAPEETHA, BOMBAY,

First Edition: 1000 Copies



Published by
Vani Vihar Vidyalaya,
Satyadhyana Vidyapeetha,
Mulund (W)
Bombay 400 080.

## विषयानुक्रमणिका ।

## चतुर्थाध्यायः

॥ श्रीशं वन्दामहे ॥

॥ श्रीमदानन्दतीर्थभगवत्पादाचार्य गुरुभ्यो नमः ॥

# ॥श्रीविष्णुतीर्थीया सन्यासपद्धतिः ॥

॥प्रथमोऽध्यायः ॥

आनन्दतीर्थं विभुमप्रमेयं विद्यासुपूर्णं परतः परेशम् ।
नारायणं दैवतवन्द्यपादमनन्तभोगे शयितं नमामि ॥ १ ॥

श्यामं नितम्बार्पिततन्तुमेखलं विद्यानिधिं ज्ञानमहागुणाढ्यम् ।
निदेशितज्ञानमहासुमार्गं व्यासं मुनीनामहमानतोऽस्मि ॥ २ ॥

समस्तवेदान् मुखतः समुद्गिरत्तुरङ्गशीर्षं वपुरादिदेवः ।
बभ्रे तु यो ब्रह्मनुताय तस्मै ज्ञानप्रदोग्ध्रे सततं नमामि ॥ ३ ॥

तथा च यः क्रोधवशादिदैत्यैर्मुग्धेषु लोकेषु बभार रूपम् ।
वायुस्तुरीयाश्रमयुक् तमग्र्यं मध्वं महान्तं प्रणतोऽस्मि तं प्रभुम् ॥ ४ ॥

नत्वाथ देवान् यतिकर्म सम्यग्वक्ष्ये मूलादान्तमीशप्रसादात् ।
गुरोश्च विद्याधिपतेश्च पञ्चरात्रोक्तमार्गेण तु सङ्ग्रहेण ॥ ५ ॥

श्रुत्वा गुरोः सम्यगेवार्थमेतं वक्ष्याम्यतः कर्मणि नात्र शङ्का ।
शब्दादिकं को हि विज्ञातुमेव शक्तो ह्यृते विष्णुवायू प्रभूतौ ॥ ६ ॥

## सन्यासग्रहणकालकथनम् ।

ब्रह्मचारी गृहस्थो वा वानप्रस्थो विरक्तिमान् ।
यदा भवति तर्ह्येव सन्यसेदविचारयन् ॥ ७ ॥

यदहरेव विरजेदिति वाक्यं हि तत्रगम् ।
ब्रह्मचर्यं समाप्याथ गृही भूत्वा वनी भवेत् ॥ ८ ॥

प्रव्रजेदन्यथा वापि ब्रह्मचर्याद्यतिर्भवेत् ।
गृहाद्वनाद्वेति बह्व्यः प्रमाणं श्रुतयोऽत्र हि ॥ ९ ॥

अधिकारिणस्तथान्ये च सन्ति केचित् प्रमादिनः ।
भक्ता हरौ विरक्ताश्च महानाम्न्यादिसंयुताः ॥ १० ॥
असंयुतो वा तीर्थानां स्नातको वान्य एव वा ।
उत्सन्नाग्निः पूर्वमेव हीनाग्निश्चापि सन्यसेत् ॥ ११ ॥
अथ व्रती वेति जगौ श्रुतिरत्र सनातनी ।
एवमेषामनुक्तानामवश्याद्भाव्यमञ्जसा ॥ १२ ॥

## अधिकारिनिरूपणम् ।

अधिकारं ब्रवीम्यस्मिन्नध्याये तु गुरोरपि ।
नाधिकारे विशेषः स्यात्प्रायशो गुरुशिष्ययोः ॥ १३ ॥
भक्तो विष्णौ त्रिवारं वा वेदाध्याय्यधमः स्मृतः ।
युक्तः शमादिना तेन पूर्वोक्तेन च मध्यमः ॥ १४ ॥
आब्रह्म तृणपर्यन्तमसारं चाप्यनित्यकम् ।
सारत्वं नाम केनापि विष्णोरन्यस्य न क्वचित् ॥ १५ ॥
क्षणे क्षणेऽन्यथाभावादनित्यं च सदा जगत् ।
विष्णुरेव सुनित्यो हि सर्वस्माच्च सुसारकः ॥ १६ ॥
इति ज्ञात्वा भवघ्नस्तु विष्णोः पादाब्जसंश्रयः ।
निर्विण्णश्चान्यत्र सदा पूर्वोक्तेनापि संयुतः ॥ १७ ॥
उत्तमस्तत्त्ववित्त्वं वा जिज्ञासुत्वमपेक्षितम् ।
उक्तं तत्र प्रमाणं तु भाष्यकारेण संविदा ॥ १८ ॥

## तत्र प्रमाणकथनम्

मन्दमध्योत्तमत्वेन त्रिविधा ह्यधिकारिणः ।
तत्र मन्दा मनुष्येषु य उत्तमगणा मताः ॥ १९ ॥
मध्यमा ऋषिगन्धर्वा देवास्तत्रोत्तमा मताः ।
इति जातिकृतो भेदस्तथान्यो गुणपूर्वकः ॥ २० ॥

भक्तिमान् परमे विष्णौ यस्त्वध्ययनवान्नरः ।
अधमः शमादिसंयुक्तो मध्यमः स उदाहृतः ॥ २१ ॥
आब्रह्म स्तम्बपर्यन्तमसारं चाप्यनित्यकम् ।
विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रयः ॥ २२ ॥
स उत्तमोऽधिकारी स्यात् सन्यस्ताखिलकर्मवान् ।
इति प्रसादाद्विष्णोस्तु ब्राह्मणो भवति स्फुटम् ॥ २३ ॥
तत्र विष्णुं प्रकोप्याशु सद्गतिं नैव चाप्नुयात् ।
तमश्चोग्रं व्रजत्याशु नात्र कार्या विचारणा ॥ २४ ॥
पुमान् कल्पतरुं यत्त आरुह्य फलविस्तृतम् ।
पुष्पादीनां यतन्नज्ञः पतेत्तस्माद्यथा ह्यधः ॥ २५ ॥

## प्रथमवेदानध्ययने दोषवर्णनम् ।

तथा कल्पतरुं वेदमर्थपत्रं सुदुर्गमम् ।
कामपल्लवसंयुक्तं धर्मपुष्पं सनातनम् ॥ २६ ॥
मोक्षैकफलसंयुक्तमधीत्य न यजन् हरिम् ।
पतत्येव विशेषेण विद्यमाने गुरौ परे ॥ २७ ॥
सर्वज्ञेन लभन् ज्ञानं पतत्येव तमो ध्रुवम् ।
जनित्वा त्रिषु वर्णेषु नाधीयाद्यः श्रुतिं स तु ॥ २८ ॥
उच्यते शूद्र एवेति ततोऽधीयाच्छ्रुतिं पराम् ।
अधीत्य वेदं येनार्थो न ज्ञातः प्रायशः स हि ॥ २९ ॥
फलवान्न भवेदूर्ध्वा गतिस्तेन न चाप्यते ।
यथा धनी न भुज्यते तथा सोऽपि स्मृतः पुमान् ॥ ३० ॥

## मनुष्यस्य प्रयोजनकथनम् ।

तथा चोक्तं भगवता व्यासेनाचिन्त्यकर्मणा ।
कर्तुं स्वधर्मं यत्नेन परित्यक्तुं च पातकम् ॥ ३१ ॥

जन्मान्तरसहस्रेषु मानुषत्वं हि लभ्यते।
तल्लब्ध्वापीह यो धर्मं न करोति स वञ्चितः॥ ३२ ॥
जन्मान्तरसहस्रेषु तपोज्ञानसमाधिभिः।
यत्र कुत्रापि भद्रेषु ब्राह्मणेषूपजायते॥ ३३ ॥

## विष्णुभक्तेः प्राधान्यकथनम्।

जन्मान्तरसहस्रेषु तपोज्ञानसमाधिभिः।
नराणां क्षीणपापानां (कृष्णे) विष्णोर्भक्तिः प्रजायते॥ ३४ ॥
इति भक्तिं हरौ कर्तुं पुंसां सर्वप्रकारतः।
प्रशंसयित्वाऽनिन्द्यापि ब्रवीति भगवानलम्॥ ३५ ॥
सत्यमेव च तद्भक्तेर्भवो भावाद्धरौ सदा।
शुध्यशुद्धी व्यर्थतां च प्राह वेदाधिपः स्वयम्॥ ३६ ॥
जन्मनोऽ(ना) र्चादिहीनस्य पुंसो विष्णोः परात्मनः।
श्वपचोऽपि महाराज विष्णुभक्तो द्विजाधिकः॥ ३७ ॥
विष्णुभक्तिविहीनो यो यतिश्च श्वपचाधमः।
जीवितं विष्णुभक्तस्य वरं पञ्च दिनान्यपि।
वृथा भक्तिविहीनस्य कल्पकोटिशतं त्वपि॥ ३८ ॥
धर्मो भवत्यधर्मोऽपि कृतो भक्तैस्तवाच्युत।
पापं भवति धर्मोऽपि यो न भक्तैः कृतो हरे॥ ३९ ॥
यो जातो नार्चयेद्विष्णुं न स्मरेन्न च कीर्तयेत्।
किं तेन जातमात्रेण भूभारेणान्नशत्रुणा॥ ४० ॥
इत्यन्यतोऽस्य भगवान् गतिं सम्यङ्निषेधति।
संसारिणः कथादिभ्यो हरेर्मुक्तिप्रदस्य हि॥ ४१ ॥
संसारसिन्धुमतिदुस्तरमुत्तितीर्षो-
र्नान्यः प्लवो भगवतः पुरुषोत्तमस्य।

लीलाकथारसनिषेवणमन्तरेण
पुंसो भवेद्विविधदुःखसमर्दितस्य ॥ ४२ ॥
जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्महृदाय आदिकवये मुह्यन्ति यं सूरयः।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो
मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ ४३ ॥
धर्मः प्रोज्झि(त्थि) तकैतवोऽत्र परमो निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्।
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥ ४४ ॥
निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम्।
पिबत भागवतं रसमालयं महुरहो रसिका भुवि भावुकाः ॥ ४५ ॥
व्यासाख्यं हि परं ब्रह्म ग्रन्थादौ धीमहीति यत्।
वक्ति तस्माद् ब्रह्मणो हि कार्यं ध्यानादि सर्वदा ॥ ४६ ॥
पुरुषेण सृतेर्मुक्त्यै नान्यथा मुक्तिमाप्नुते।
जन्मादिकारणास्यास्य परब्रह्मण एव हि ॥ ४७ ॥
विना मुख्यप्रसादेन मोक्षो नास्त्येव सर्वथा।
इति ज्ञापयितुं सोऽपि धीमहीत्यब्रवीत्स्वयम् ॥ ४८ ॥
बन्धमिथ्यात्वतो बन्धमिथ्यात्वज्ञप्तितोऽस्य हि।
स्यान्मुक्तिर्न प्रसादेन प्राप्तायामिति वेदराट् ॥ ४९ ॥
जन्मादेर्नैव मिथ्यात्वमिति वक्तुं स एव हि।
स्वेन धाम्नैव तद्ब्रह्म निरस्तकुहकं परम् ॥ ५० ॥
इति प्राह परा धर्माः शुद्धा भागवतप्रियाः।
अन्येच्छावर्जिनो(तो) विष्णोर्विना प्रीतिं हि मोक्षदाः ॥ ५१ ॥

सन्ति भागवते नित्यमिति वक्तुं च स स्वयम्।
अन्येष्वेतादृशा धर्मा न सन्तीति च वेदवित्॥ ५२ ॥
किं वा परैरिति प्राह श्रोतव्यादि तथास्य च।
श्रीमद्भागवतस्याह सद्य इत्यादिना हरिः॥ ५३ ॥
सर्वस्य सुकृतस्याद्धा सुफलंत्वीश्वरज्ञता।
इति प्रतीयते चात्र परिचर्या तथा हरेः॥ ५४ ॥
वैष्णवानां तु शास्त्राणां तत्त्वमार्गे प्रवर्तताम्।
अस्योपलक्षणत्वाच्च श्रीमद्भागवतस्य हि॥ ५५ ॥
तेषामपि सदाभ्यासः कार्य एव न संशयः।
सारो वृक्षरसो यस्तत्समाहारं फलं विदुः॥ ५६ ॥
सम्यक्तस्य समाहारः पक्वमित्युच्यते सुरैः।
तद्वद्वेदाख्यवृक्षस्य फलं भागवतं विदुः॥ ५७ ॥
तदुक्तोऽर्यो (त्यो यो) रसः प्रोक्तो हरेरेव कथाः शुभाः।
प्रोच्यन्ते तस्य भक्तानामपि नान्यस्य कस्यचित्॥ ५८ ॥
अनुग्रहाय लोकस्य पिबतेत्यब्रवीद्वचः।
श्रृणुतेत्यर्थतो यावज्जन्मनो मरणं सदा॥ ५९ ॥
अहो इत्यवदद्यस्माच्छ्रुतिरस्याः कथा मताः।
हृद्याश्चातीव भक्तानां नाभक्तानां कदाचन॥ ६० ॥
तस्मात्सर्वप्रयत्नेन श्रृणुयात्कथयेत्कथाः।
मुमुक्षुश्च बुभुक्षुश्च पापानां शान्तये तथा॥ ६१ ॥
तथा वक्ति श्रुतिः सम्यगज्ञस्य विफलं हरेः।
भगवांस्त्वेनमज्ञातो न भोजयति वेदवत्॥ ६२ ॥
अनुक्तेऽन्यस्य कर्माणि कृतान्यपि ह वा यदि।
अनेवंवित् पुण्यकर्मा करोत्यस्यां ततस्तु तत्॥ ६३ ॥

क्षीयते वै ततो विष्णुमाश्रयं समुपास्य तम् ।
य उपास्ते हरिं लोकं सोऽस्मात्कामानवाप्नुते ॥ ६४ ॥
तस्य विष्णोः प्रसादेन जगावन्या श्रुतिस्तथा ।
नान्यः पन्थास्ततो विष्णोः प्रसादादेव मुच्यते ॥ ६५ ॥
प्रसादोऽपि ज्ञानिनः स्यान्मुख्यो ज्ञानं च तत्त्वतः ।
आगमान् वैष्णवान् शुद्धान् सम्यगभ्यसतो भवेत् ॥ ६६ ॥
अभ्यासश्चाश्रमे सम्यक्तुरीये सर्वदा भवेत् ।
विरक्तस्सन्यसेत्तस्मान्मोक्षेप्सुश्शर्मवित्तये ॥ ६७ ॥
अनादिकालतः सोऽयं जीवः संसरति भ्रमन् ।
नरके गर्भवासे च स्वर्गे नानाशरीरगः ॥ ६८ ॥
दुःखं स्यात्सुखहानौ हि तस्मात्स्वर्गेऽपि मोदतः ।
सुदुःखं स्यात्पतानीति कर्मान्ते स पतेत्ततः ॥ ६९ ॥
ततो गर्भमवाप्नोति कललादीनथाप्नुयात् ।
विष्ठामूत्रभरे पात्रे तिष्ठति स्म सुबद्धवत् ॥ ७० ॥
जान्वोस्तु नेत्रके न्यस्य तयोरुभयतः करे ।
पादयोरन्तरे हस्तौ पार्ष्ण्योर्वृषणमन्तरे ॥ ७१ ॥
मृदुदेहो मातृभुक्तैः कटुकोष्णादिभिः सदा ।
दह्यते चान्त्रमध्यस्थः कृमिभिश्च सुतुद्यते ॥ ७२ ॥
निवारणायात्यशक्त आर्तो निश्वसिति ह्यलम् ।
तत्र कश्चित्पुमान् ज्ञानं प्राप्य पश्यति वै हरिम् ॥ ७३ ॥
शङ्खचक्रगदापद्मधरं कौशेयवाससम् ।
नानाभरणभूषाङ्गमुद्यदादित्यवर्चसम् ॥ ७४ ॥
जन्मान्तराणि सञ्जानन् नानायोनिषु दुःखितः ।
तस्य विष्णोः प्रसादात्तजन्मसंक्षयमिच्छति ॥ ७५ ॥

इतो गर्ता(र्भा) द्विनिर्गम्य तर्ह्येव सुखदं हरिम् ।
मोक्षदं तत्त्वमार्गेण सम्पूज्य विधिवत्प्रभुम् ॥ ७६ ॥
नैव प्राप्स्याम्यहं (थो) वासं गर्भे चेति स्मरेत्स तु ।
जननादामृतिं यत्नाच्छ्रुत्वा शास्त्रं तथा कथाम् ॥ ७७ ॥
विष्णुसक्तमतिर्मोक्षं प्राप्नुयामिति चैकदा ।
सूतिवातेन तस्मात्तु जायते तस्य वै स्मृतिम् ॥ ७८ ॥
विधुनोति हरेर्माया दैवी सर्वतिरस्करी ।
मशका मत्कुणाश्चैनं प्रभक्षन्ति निवारिताः ॥ ७९ ॥
क्षुत्तृड्भ्यामर्दितः सोऽथ विष्ठामूत्रपरिप्लुतः ।
रुवन् प्रभक्षन् विष्ठादि शेते लब्धनिरूपितः ॥ ८० ॥

## पुरुषपापप्रवृत्तिकथनम् ।

यौवने विषयी कामी सर्वशत्रुविवर्जितः ।
यतमानो लभन् सर्वान् धावतीतस्ततस्सदा ॥ ८१ ॥
ततश्चौर्यादिकं कुर्वन् बाध्यते तत्रतत्र तु ।
वार्धक्ये पुत्रभार्याभिरनादृत्य प्रभक्षति ॥ ८२ ॥
दत्तं वित्तादिहीनस्तु पुरुषार्थे सुशोचति ।
बाल्ये मात्रादिभिर्धर्मान्न करोति निवारितः ॥ ८३ ॥
यौवने चातिसक्तस्सन् वार्धक्येऽशक्त एव च ।
पञ्चयज्ञांस्तथा सन्ध्यामुपवासादिकं तथा ॥ ८४ ॥
अकुर्वंस्तु क्रमेणैव कासश्वासादिसंयुतः ।
विष्ठामूत्रादिभिर्लिप्तः पश्यति स्म महाभटान् ॥ ८५ ॥

## यमदूतवशत्वकथनम् ।

दृष्ट्वा तान्यमदूतांस्तु भीतो मात्रादिकानथ ।
आह्वयन् बहुशोऽधीरः शकृन्मूत्रं च मुञ्चति ॥ ८६ ॥

कश्चित्तत्र वशी धीरो भगवन्तं स्मरेद्दृढम् ।
तस्य तेभ्यो भयं नास्ति भक्तत्वादच्युतस्य हि ॥ ८७ ॥
रोरूयत्सु स्वकेष्वन्यः कथञ्चित्प्रैति दुःखितः ।
तं याम्यास्तु गळे बध्वा पापिनं भक्तिवर्जितम् ॥ ८८ ॥
कर्षन्ति निर्जने मार्गे वह्निवत्तप्तवाळुके ।
निच्छाये शर्कराद्यैश्च संयुक्ते गमयन्ति च ॥ ८९ ॥
प्रायः कलावन्यजत्वाद्दत्तं पुत्रादिबन्धुभिः ।
न लभ्यते विष्णुभक्तेर्हीनत्वाद्दातृभुञ्जतोः ॥ ९० ॥

## (यममार्ग) नरकप्रवेशकथनम् ।

योजनानां सहस्राणि नवतिर्नव चाध्वनः ।
द्विमुहूर्ताद्दिनाद्वापि दशाहाद्वत्सरादियात् ॥ ९१ ॥
ततो यमपुरीं प्राप्य यमं तत्र प्रपश्यति ।
नानाकृतिं भीषयन्तं दृष्ट्वा स्थाणूपमो भवेत् ॥ ९२ ॥
शंसत्सु स्वानि कर्माणि तर्जयित्वा मुखे बलात् ।
अभिगर्जत्सिंहमध्यगतसारङ्गवद्भवेत् ॥ ९३ ॥
ततो यमभटैराज्ञाकर्तृभिर्नरकं प्रति ।
नीयते तत्र भुङ्क्ते हि दुःखं संवत्सरान् बहून् ॥ ९४ ॥

## यातनाकथनम् ।

एकत्राङ्गारनिचये जानुदघ्नः सवैशसः ।
पदेपदे नश्यमानपादो धावत्यृतेऽस्थिभिः ॥ ९५ ॥
निर्गच्छन्तं ततो याम्या वारयन्त्यनिशं तटात् ।
अन्यज्ज्वलत्ता(अन्यज्जलं ता) प्रतलमधरस्थेन वह्निना ॥ ९६ ॥
तस्मिन् बध्वा हस्तपादौ प्रक्षिपन्ति ततो बहु ।
चक्रवद्भ्रमते पापी दह्यमानशरीरकः ॥ ९७ ॥

असिधारासमान् वृक्षान् कर्षन्त्यारोप्य चान्यतः।
दूतैस्तु भिन्नसर्वाङ्गः स्त्रवद्रक्तस्तु रौति च॥ ९८ ॥
अन्यत्र पात्य तं याम्याः कुर्वन्ति तिलशः सदा।
अन्यत्र मांसविष्ठादिगर्ते पात्य च तद्बलात्॥ ९९ ॥
भोजयन्ति तथान्यत्र स्वमांसानि च काम्यतः।
भोजयेयुस्तथान्यत्र कुम्भे तैलं वसासमम्॥ १०० ॥
मिश्रितं जन्तुचू(पु) र्णेन त्रपुणा च समन्वितम्।
क्वाथयित्वा नरं तत्र विसृजन्त्युग्रपौरुषाः॥ १०१ ॥
अवाङ्मुखं ततः सम्यक् क्वाथयन्ति च किङ्कराः।
एवमेतेषु तप्तानामसवो नापयन्ति हि॥ १०२ ॥
यावत्पापफलं तेषां तदन्तेऽतो व्रजन्ति च।
एवं मार्गज्ञापनाय संक्षेपेण मयोदिताः॥ १०३ ॥
यातना अपि कोट्यंशो दुःखस्यात्रोदितो न हि।
शिष्टेन तेन पापेन नानाकुत्सितयोनिषु॥ १०४ ॥
जायतेऽतः पुनः पापं कृत्वा नरकमेति च।
एवं जन्मस्वनन्तेषु क्लिश्यमानः पुनः पुनः॥ १०५ ॥
नाविन्दत हरिं मोक्षसुखदं तत्त्वविद्यया।
अहो पश्यत मुग्धत्वं लोकस्यात्महनोऽस्य हि॥ १०६ ॥

## तमोनिरूपणम्।

गङ्गायां तृषितो दूरं मृगतृष्णां हि गच्छति।
यथैवं हृदि संस्थं तं हरिं ध्यानादिकर्मभिः॥ १०७ ॥
अपहाया(अमहय्या) स्य कर्माणि कृत्वा संसारतापितः।
अन्ततस्तम एवासौ याति विष्णोरनादरात्॥ १०८ ॥
तमस्संज्ञं च नरकं नित्यं विविधमीरितम्।

तामिस्त्रमन्धतामिस्त्रं तत्रान्धं त्रिविधं मतम्॥ १०९ ॥
ऊर्ध्वमध्येऽधरं चापि श्रवणादेव मारकम्।
विस्तारतोऽधरं तत्र पूर्वं राजा मृतः किल॥ ११० ॥

## तमस्साधननिरूपणम्।

तस्मात्स भारते कृष्णो धर्मपुत्राय नोक्तवान्।
तत्रैते निपतन्त्याशु विष्णोरन्यं समं ब्रुवन्॥ १११ ॥
अधिकं च स्वतन्त्रं वा विष्णोश्चैवास्वतन्त्रताम्।
सार्वज्ञाद्यगुणत्वं च सत्त्वादीनां च युक्तताम्॥ ११२ ॥
दोषित्वमथ निन्द्यत्वं शुद्धचैतन्यरूपिणः।
अवतारेषु भिन्नत्वं दुःखित्वं शक्तिहीनताम्॥ ११३ ॥
अज्ञत्वं चैव बद्धत्वं भिन्नत्वं जनितां तथा।
वृद्धिं च लोकवत्तस्य देहत्यागं ब्रुवं(वदं) स्तथा॥ ११४ ॥
अवतारव्यत्ययं च सर्वब्रह्मत्वमेव च।
जीवब्रह्मत्वमथ वा हरेर्जीवत्वमेव च॥ ११५ ॥
जीवेशयोरभिन्नत्वं भिन्नत्वं धर्मधर्मिणोः।
हरौ रमायां च वदन् ब्रह्मादिसमतां मिथः॥ ११६ ॥
विनिन्दन् हरिभक्तांस्तु ह्यनिन्दन्नुक्तलक्षणान्।
वेदान्विनिन्दंश्च तथा गुरुंस्तत्त्वप्रदानपि॥ ११७ ॥
ईरितेषु तु धर्मेषु नास्तिक्यं प्रब्रुवन्नपि।
औदासीन्यात्तथा द्वेषात्प्रमादाच्छक्तितोऽपि वा॥ ११८ ॥
उत्साहात् कर्मणो दैवाच्छठादासुरभावतः।
आग्रहाद्वैरतो वापि मात्सर्यादन्यकामतः॥ ११९ ॥

## तमसि दुःखानुभवप्रकारः।

लब्धे गुरौ सर्वविदि दुर्लभं परमं पदम्।

त एते सर्व एवात्र श्रोत्रादीन्द्रियपञ्चभिः ॥ १२० ॥
स्वरूपभृतैः शब्दादीन् घोररूपाननेकधा ।
अनन्तब्रह्मणां कालान् भुञ्जते परितापिताः ॥ १२१ ॥
यथा मुक्तः सुखं भुङ्क्ते निजभूतेन्द्रियैः सदा ।
परमानन्दरूपः सन्ननन्तब्रह्मणां पदे ॥ १२२ ॥
एवं दुःखस्वरूपत्वं हरिद्वेषात् समागताः ।
तत्रापि द्वेषरूपास्ते निवसन्ति परेशितुः ॥ १२३ ॥
मध्योर्ध्वयोस्तु तामिस्त्रे क्रमाद्दुःखाल्पकेषु हि ।
वसन्ति द्वेषदार्ढ्यस्य क्रमादल्पत्वहेतुतः ॥ १२४ ॥

## तमःपतितानुशोचनम् ।

पुरा तदापि चाल्पत्वमपेक्ष्याधरमेव तु ।
एषोऽर्थः सर्वशास्त्रेषु तत्र तत्र च गीयते ॥ १२५ ॥
अनुग्रहाय देवेन संसारपरितापिनाम् ।
नराणां सक्तचित्तानां विरक्त्या शर्मवित्तये ॥ १२६ ॥
हरिसम्भजनायापि ज्ञानलाभाय विद्यया ।
धिङ्मां योऽहं शुभं कर्म जीवन्नाकरवं क्वचित् ।
अकार्षं हि सदा पापं हा भयं महदुत्थितम् ॥ १२७ ॥

## उक्तार्थे प्रमाणानि ।

अन्धः तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायां रताः ॥ १२८ ॥
अनन्दा नाम ये लोका अन्धेन तमसा वृताः ।
तांस्ते प्रेत्याधिगच्छन्ति ये के चात्महनो जनाः ॥ १२९ ॥
इत्यादीनि तु वाक्यानि प्रमाणं तत्र सर्वशः ।
अविद्योपासको ज्ञेयस्त्वविद्याया अदूषकः ।

विद्यारतः श्रुतिश्चाह यस्तद्वेदोभयं सह ॥ १३० ॥
अबुधो(द्धो) ज्ञानिसद्भावे न जानन्ति हरिं परम् ।
ये ते त्वात्महनो विष्णुं परं नास्तीति वादिनः ॥ १३१ ॥

## भगवत्स्मरणस्यावश्यकत्वकथनम् ।

विष्णुपूजारतस्याह यमो नरकहीनताम् ।
पुराणे वैष्णवे तांश्च श्लोकान्वक्ष्यामि सादरम् ॥ १३२ ॥
वपुषोऽन्ते ततो यान्ति यातनास्तत्प्रचोदिताः ।
यातनाभ्यः परिभ्रष्टा देवाद्यास्त्वथ योनिषु ॥ १३३ ॥
जन्तवः परिवर्तन्तं शास्त्राणामेष निर्णयः ।
यथा विष्णुमृते नान्यः त्राता संसारसागरे ॥ १३४ ॥
मया चैतद्यथान्यायं सम्यग्वत्स तवोदितम् ।
किङ्करा दण्डपाशा वा न यमो न च यातनाः ॥ १३५ ॥
प्रभवन्तीह यस्यात्मा केशवालम्बनः सदा ।
मा ब्रूत मातस्तातेति मरणे समुपस्थिते ॥ १३६ ॥
आहूतावपि तौ तत्र किं कुर्वाते हरिं विना ।

## भेदसमर्थनम् ।

इति विष्णुं परं सन्तं सर्वज्ञं सर्वनेतृकम् ॥ १३७ ॥
स्वतन्त्रं सर्वकर्तारं सर्वदोषविवर्जितम् ।
सुखज्ञानैकरूपं तं गुणसर्वस्वबृंहितम् ॥ १३८ ॥
पूर्णं सर्वगते वेदैरेवं वेद्यं सनातनैः ।
अज्ञादल्पाज्जीवसङ्घादनाथाद्दोषसंयुतात् ॥ १३९ ॥
अस्वतन्त्रादल्पकर्तुर्दुःखाज्ञानस्वरूपिणः ।
अभिन्नं हि गुणान् सर्वानपहाय तथान्यगान् ॥ १४० ॥

## मायिमतानुवादः।

वदत्येवं ततो मायी पुराणेऽस्मिंस्तथैव च।
एकत्वं भण्यते वेदे चैकमेवाद्वितीयकम्॥ १४१ ॥
सर्वं च खल्विदं ब्रह्म तद्योऽहं ब्रह्म वेद च।
इन्द्रं मित्रं च स ब्रह्मा वाक्येष्वेतेषु भिन्नता॥ १४२ ॥
प्रतीयते ततस्तस्य मोक्षः प्रीत्यैव नान्यथा।
हरेरिति वचो नैव घटते भेदवेदनात्॥ १४३ ॥
जीवात्मनो भवेन्मोक्षस्तदा हीदं निवर्तते।
ज्ञेयज्ञानज्ञातृहीनं सदा ब्रह्मावतिष्ठते॥ १४४ ॥

## मायिमतदूषणम्।

इति पक्षो न संसत्सु भासते परमस्य हि।
सर्वज्ञत्वादिकं रूपं जीवस्याल्पज्ञतादिकम्॥ १४५ ॥
ब्रह्मणः सर्ववित्त्वादि विना नास्त्येव रूपिता।
तारतम्येन जीवस्य स्वल्पज्ञत्वादृतेऽपि च॥ १४६ ॥
न रूपमत ऐक्यं तु तयोरेव विधीयते।
सर्वज्ञाल्पज्ञतादीनां विरोधाच्च परस्परम्॥ १४७ ॥
गुणहानौ यतो रूपहानिरेव भविष्यति।
रूपहानौ तयोः सम्यगैक्यं शशनृशृङ्गयोः॥ १४८ ॥
पितो( ?) श्चैक्यं न युज्येत चित्पञ्चज्ञत्वमेव च।
ज्ञातृज्ञेयज्ञानहीनज्ञत्वाभावात् कथञ्चन॥ १४९ ॥
यथा रजनिपीतत्वं शङ्खशुक्लत्वमेव च।
विहाय वस्तुनोरैक्यं नानुभूतं तु केनचित्॥ १५० ॥
ज्ञातृज्ञानज्ञेयहीनं शून्यमेव न चापरम्।
यथा रक्षकरक्ष्यादि विना रक्षा न विद्यते॥ १५१ ॥

वाक्यार्थश्चान्यथैवात्र दृश्यते ह्यविरोधतः ।
यदधीनमिदं सर्वं यतः सृष्टमिदं जगत् ॥ १५२ ॥
तस्मात्तदिति सम्प्रोक्तं विद्धद्भिर्वेदपारगैः ।
अधिकस्य समस्यापि स्वतन्त्रस्यापि वर्जनात् ॥ १५३ ॥
एक एवाद्वितीयोऽसौ न शास्यजनवर्जनात् ।
अन्तर्यामिणमीशेशमपेक्ष्याहं त्वमित्यपि ॥ १५४ ॥
सर्वशब्दाः प्रयुज्यन्ते सति भेदेऽपि वस्तुषु ।
अन्तर्यामिस्वरूपेण ब्रह्मरुद्राद्यभिन्नता ।
न तु जीवस्वरूपेण जीवा भिन्ना यतो हरेः ॥ १५५ ॥
विशेषाभेदवचनं सन्निधानविशेषतः ।
सन्निधानं तु तत्प्रोक्तं सामर्थ्यव्यञ्जनं हरेः ।
स्वामित्वं तु हरेरेवं मुख्यमन्यस्य भृत्यता ॥ १५६ ॥
यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः ।
यो देवानां देवतमस्तवोजा तस्मै त्वा तेभ्यस्त्वा ॥ १५७ ॥
स प्रथमः सन्कृतिर्विश्वकर्मा स प्रथमो मित्रो वरुणो अग्निः ।
स प्रथमो बृहस्पतिः श्चिकित्वाँ तस्मा इन्द्राय सुतमाजुहोमि ॥ १५८ ॥
अन्तर्याम्यदिधैवादिष्वन्तरस्तूपपत्तितः ।
असर्वः सर्व इव च यः पृथिव्यां तथाधिकः ॥ १५९ ॥
परमं ब्रह्मविद्ब्रह्म पूर्णो भवति नान्यथा ।
जातिजीवादिधातोस्तु जीवोऽपि ब्रह्म भण्यते ॥ १६० ॥

## भेदप्रतिपादकवाक्यानि ।

उत्तमत्वेन देवानां मध्ये प्रोक्तो यतस्ततः ।
तस्मै तेभ्यश्चेति पृथगुक्तेर्जीवपरो सदा ॥ १६१ ॥
भिन्नौ नो चेत्पृथक् सैषा न वदेत्तत्त्ववादिनि ।

पदेन प्रथमेनासावद्य इत्येव चागतः ॥ १६२ ॥
न चेत्सुव्यर्थता तस्य स्थितस्यादौ प्रतिप्रति ।
तस्मान्नामानि सर्वाणि तस्यैवेति प्रतीयते ॥ १६३ ॥
नामानि विश्वान्यभि न यो देवानां च नामधाः ।
अतोऽपरे वराश्चैव तदीयाश्चापि सर्वशः ॥ १६४ ॥
सन्ति पश्चात्तनात्तज्ञास्तत्तन्नामाभिमानिनः ।
इत्यादिश्रुतिभिः सम्यग्भेदपक्षोऽतिशोभते ॥ १६५ ॥
तथा भेदेऽपि सर्वत्र वाक्यान्यनवकाशतः ।
सन्ति तेषामहं मध्ये कानिचित्सम्प्रदर्शये ॥ १६६ ॥
यथेश्वरस्य जीवस्य भेदः सत्यो विनिश्चयात् ।
एवमेव हि मे वाचं सत्यां कर्तुमिहार्हसि ॥ १६७ ॥
यथेश्वरश्च जीवश्च सत्यभेदौ परस्पररम् ।
तेन सत्येन मां देवास्त्रायन्तु सहकेशवाः ॥ १६८ ॥
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६९ ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७० ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १७१ ॥
यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १७२ ॥
इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ १७३ ॥

## जगतः सत्यत्वसमर्थनम् ।

सृष्टिश्च प्रळयश्चैव संहारो मुक्तिरेव च ।
देवा ऋषिप्रभृतयो लोका भूरादयस्तथा ॥ १७४ ॥
अनाद्यनन्तकालीनाः सर्वदैकप्रकारतः ।
जगत्प्रवाहः सत्योऽहं नैव मिथ्या कथञ्चन ॥ १७५ ॥
ये त्वेतदन्यथा ब्रूयुः सर्वहन्तार एव ते ।
देवैर्विष्ण्वादिभिः शप्ता ऋषिभिर्मानुषादिभिः ॥ १७६ ॥
सेतिहासैस्तथा वेदैः सर्वे यान्तयधरं तमः ।
शास्त्रतत्त्वमविज्ञाय तथा वादबला जनाः ।
कामक्रोधाभिभूतत्वादहङ्कारवशं गताः ॥ १७७ ॥

## मायिमतनिन्दा

याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ।
ब्रह्मस्तेना निरानन्दा अपक्वमनसोऽशिवाः ॥ १७८ ॥
वैगुण्यमेव पश्यन्ति न गुणानि विनियुज्जते ।
तेषां तमश्शीराणां तम एव परायणम् ॥ १७९ ॥
यतः स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः ।
कथमस्मि स इत्येव सम्बन्धः स्यादसंहितः ॥ १८० ॥
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परभूतं किमन्यत्कामहैतुकम् ॥ १८१ ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ १८२ ॥
सर्वब्रह्मत्ववेत्तारो जीवब्रह्मत्ववेदिनः ।
अन्यसाम्यविदो विष्णोः विष्णुद्वेष्टार एव च ॥ १८३ ॥
सर्वे यान्ति तमो घोरं न तेषामुत्थितिः क्वचित् ।
भेदस्य व्यपदेशाच्च तत्र स्थित्यटनं तथा ॥ १८४ ॥

शारीरश्चोभयेऽपीह भेदेनैनमधीयते ।
उपदेशात्पृथक् चैव ज्ञोऽत एवेत्यथापि च ।
शारीरोऽनुपपत्तेर्न नेतरस्त्वनवस्थितेः ॥ १८५ ॥
नेतरोऽनुपपत्तेश्च भिन्नोऽचिन्त्यस्तथापि च ।
कविर्मनीषी सत्यः सः विश्वं सत्यं प्रघानु च ॥ १८६ ॥
सत्यमेनं यच्चिकेत सत्य आत्मा तथा परम् ।
अनाद्यनन्तं जगदेतदीदृक् प्रवर्तते नात्र विचार्यमस्ति ।
न चान्यथा क्वापि च तस्य चेदमभूत्पुरा नापि तथाभविष्यत् ॥ १८७ ॥

## जगत्सत्यत्वे प्रमाणानि ।

असत्यमाहुर्जगदेतदज्ञाः शक्तिं हरेर्ये न विदुः परां हि ।
यः सत्यरूपं जगदेतदीदृक् सृष्ट्वा त्वभूत्सत्यकर्मा महात्मा ॥ १८८ ॥
प्रत्यक्षादिप्रमाणेन सिद्धत्वात्तु परस्परम् ।
भेदस्याभेदवाक्यानामनुवादो ह्यभेदके ॥ १८९ ॥
तात्पर्यं तत्त्वमस्यादिवाक्यानामेव दृश्यते ।
इति चेद्देवसंस्थे स स्वस्मादन्यं न वेत्ति हि ॥ १९० ॥
प्राणादितन्त्रं तस्मात्तु प्राप्तो भेदः पुरा ततः ।
अन्यमीशं वदत्यद्धा श्रुतिस्तन्नानुवादिता ॥ १९१ ॥

## हरेरनुमानाद्यवेद्यत्वकथनम् ।

विमतं कर्तृसहितं कार्यत्वाद्घटवन्मया ।
नानया सिध्यति परो विमतं कर्तुरुत्थितम् ॥ १९२ ॥
रहितत्वात्सम्मतस्य प्रतिपन्नो यथाहृतेः ।
मयान्यगतयेशं तं नैव पश्यति चाक्षजम् ॥ १९३ ॥
अर्थापत्त्युपमेऽभावो वर्तते नैव केशवे ।
अनुवादस्ततः कुत्र भेदोऽस्माकं मतेन च ॥ १९४ ॥

## भेदवाक्यस्याननुवादित्वव्युत्पादनम् ।

अनुवादः सुबहुभिः श्रुते दृष्टे च वस्तुनि ।
नाप्रामाण्यं वदन्ति ज्ञाः प्राबल्यस्यैव दर्शनात् ॥ १९५ ॥
तत्त्वमस्यादिकेऽभ्यासे प्रामाण्यं तैरपि स्फुटम् ।
अङ्गीकार्यं यतस्तस्माद्वाक्यानां नानुवादिता ॥ १९६ ॥
यस्तु पूर्वं न बुद्धः स्यात्तदर्थं वाक्यमुत्तरम् ।
इति चेदक्षजादेर्यो न बुद्धो वाक्यमस्य तु ॥ १९७ ॥

## मायिमतस्य बौद्धाभेदकथनम् ।

अतोऽनुवादिता नैव यस्मिन् पक्षेऽनुवादिता ।
विना त्वभेदवाक्यानां द्वित्राणां सर्वशोऽपि हि ॥ १९८ ॥
अनन्तानन्तवेदानामनन्ता इति हि श्रुतिः ।
अङ्गीकार्यो यतस्तस्मान्न विशेषोऽस्ति बौद्धतः ॥ १९९ ॥
सोऽपि वेदेषु तूक्तानामर्थानामेष शून्यताम् ।
वक्ति मिथ्यात्वतोऽस्माकं न साम्यं तेन विद्यते ॥ २०० ॥

## मायिमतस्य दुष्टताव्युत्पादनम् ।

इति चेत्सदसत्त्वस्य वैलक्षण्यं प्रमाणतः ।
न युज्यतेऽसतः ख्यातेरयोगाच्च सतस्तथा ॥ २०१ ॥
बाधभावादिति प्राह वैलक्षण्यं विचेतनः ।
लोकानुभूतिं श्रृणुमो नैव लोकस्तथा वदेत् ॥ २०२ ॥
असत्ता तेन विज्ञाता यदि नो वा न चेन्न सः ।
निवारयति विज्ञाता कथं तर्हि निषेधति ॥ २०३ ॥
विधौ च प्रतिषेधे च तज्ज्ञानं प्रथमं भवेत् ।
न चेद्यः किञ्चिदेवोक्तं स्यात्तस्मात्प्रथमाज्ञता ॥ २०४ ॥

वैलक्षण्यं सतश्चापि जातेस्तन्मात्रतोऽपि वा ।
जातितश्चेत्सद्बहुत्वं तन्मात्रात्सिद्धसाधनम् ॥ २०५ ॥
अङ्गीकृते ब्रह्मणोऽद्धा वैलक्षण्यं ज्ञतादिभिः ।
अतो विलक्षणत्वस्य सदसद्भ्यामभावतः ॥ २०६ ॥

## बौद्धान्मायिनो हीनत्वकथनम् ।

बौद्धात्कष्टतरो मायी सर्ववेदैर्बहिष्कृतः ।
स्वयमेव म तु ब्रूते वेदबाह्यत्वमात्मनः ॥ २०७ ॥
विशिष्टो मायिनो (वादिनो) मायी वैदिकोऽहमिति ब्रुवन् ।
लोकान् विनाशयति हि हीनो बौद्धादतः परम् ॥ २०८ ॥

## मायिनश्चोरत्वापादनम् ।

यथा चोरो मन्त्रयित्वा सर्वस्वहरणाय वै ।
गच्छेद्गृहं तु धनिनामेको याजिवदेव वा ॥ २०९ ॥
सहस्रणीर्वा अथ वा विद्वन्मानी स तत्र हि ।
वृत्त्या यया कया वापि प्रतीक्षन् विवरं वसन् ॥ २१० ॥
विश्वस्तेषु स्वपत्स्वेषु वित्तं सर्वं ददात्यसौ ।
बहिष्ठाय तु चोराय मुदा ययतुरुत्तरम् ॥ २११ ॥
परिहार्यो भवेद्बाह्यो(न्यो) वर्त्मवृत्त्यादिभिस्ततः ।
महापापीति सम्प्रोक्तः दस्युरन्तर्गतः शठः ॥ २१२ ॥
तथा मायी च सर्वैस्तु सदा पूज्यतमाश्रमम् ।
अनुतिष्ठंस्तत्त्वसूत्रभाष्यं व्य(न्य) कृत यत्नतः ॥ २१३ ॥
प्रायशः पुरुषार्थे तु लोकस्याकाङ्क्षता(तो) यतः ।
अतः परमसूत्राणां भाष्यं सर्वेऽपि गृह्णते ॥ २१४ ॥
अनूचानस्तु तद्भाष्यं वैदिकोऽहमिति ब्रुवन् ।
लोके स्ववशमायाते विश्वस्ते च शनैश्शनैः ॥ २१५ ॥

वेदस्य क्रमशोऽतत्त्वावेदकाख्यप्रमाणताम् ।
आपाद्य जगतोऽप्येष ब्रूते मिथ्याख्यशून्यताम् ॥ २१६ ॥
शून्यत्वं स स्वयं चापि ब्रवीति जगतो ननु ।
पूर्वं नासीदिदानीं न नोत्तरं च भविष्यति ॥ २१७ ॥
इति ज्ञानं यतस्तस्य समो बौद्धेन भण्यते ।
ततो विश्वस्तचोरत्वादधिकश्च निगद्यते ॥ २१८ ॥
कथञ्चिद्गतिमाप्नोति लोकोऽयं कर्मबन्धनः ।
इति मत्वा परेशस्य वेदानां च विनिन्दनम् ॥ २१९ ॥
वेदा(देवा) दीनां कारयित्वा तमस्यन्धे हि शाश्वते ।
निपातयति लोकं तत्पुरुषार्थस्य लुम्पनात् ।
चोर इत्युच्यते मायी सर्वकर्मबहिष्कृतः ॥ २२० ॥

## परोक्ततत्वमस्यादिवाक्यार्थखण्डनम् ।

तत्त्वमस्यादिवाक्यानामपि नैवास्य मानता ।
तदित्युक्ते त्वमसितो विशेषो यदि गम्यते ॥ २२१ ॥
न वा नो चेद्व्यर्थता स्याद्विशेषश्चेद्विशेषिता ।
सार्वज्ञ्यादिविशेषाणामस्वीकाराय मायिना ॥ २२२ ॥
नाङ्गीकृता विशेषास्तु सर्वे सर्वज्ञता यदि ।
जगदस्तित्वमेव स्यादस्तित्वे जगतो हरेः (भवेत्) ॥ २२३ ॥
सर्वैश्वर्यादिधर्माः स्युर्भावं तेषां तु सज्जते ।
स्यात्सङ्गतिश्च वेदोक्ता तस्मान्नाङ्गीकरोत्ययम् ॥ २२४ ॥

## मायिमते शास्त्रवैयर्थ्यकथनम् ।

अवाच्यस्य तदित्युक्ते विशेषो यदि वा न वा ।
स्याच्चेद्विशेषिता नो चेद्व्यर्थतेति समस्तशः ॥ २२५ ॥
अप्रामाण्यं भवेत्तस्य वेदस्येति न वैदिकः ।

ब्रह्मणः स्वप्रकाशत्वाविशेषाणामभावतः।
अशेषाणां हि वैयर्थ्यं शास्त्रस्य न भवेत्कथम्॥ २२६ ॥

## मायिनो उन्मत्तत्वव्युत्पादनम्।

किञ्च साक्षिमितं सर्वमपलप्य वदन्वद।
ज्ञाने जातेऽथवा पूर्वं शास्त्रमेतत्कृतं त्वया॥ २२७ ॥
जाते चेन्नैव घटते ह्यभावात्सर्ववस्तुनः।
शरीरत्यागपर्यन्तं सर्वमस्तीति चेत्तथा॥ २२८ ॥
अभावेनात्मनोऽन्यस्य ज्ञातत्वाच्च तथा किमु।
अधिकारिणं वदेत्तत्र वन्ध्यापुत्रोपमं परम्॥ २२९ ॥
पूर्वं चेदज्ञगदितं न प्रमाणं भविष्यति।
विशेषैरपि सर्वैस्तद्विनिर्मुक्तं स्वभावतः॥ २३० ॥
अवाच्यं ब्रह्म चाज्ञेयमतर्क्यं लक्षितं त्विति।
उक्त्वा पुनस्तदर्थं हि शास्त्रमेतद् ब्रूवन् पुनः (खलः) ॥ २३१ ॥
गुणादुन्मत्त एवासौ विदधाति बहूनलम्।
तस्मादेव वदन्तस्तु असुरा इति निश्चिताः॥ २३२ ॥

## ऐक्यवादस्यासुरमतत्वव्युत्पादनम्।

लोकहानाय जाता वै तथाह भगवान्प्रभुः।
द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे श्रृणु॥ २३३ ॥
प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते॥ २३४ ॥
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम्॥ २३५ ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।

प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ २३६ ॥
अहं ब्रह्मेति वेनस्तु ध्यायन्नापाधरं तमः।
तद्वाद्धान्तो महीव्याप्तो भेर्या ख्यापयतोऽनिशम् ॥ २३७ ॥
असुरा राक्षसाश्चैव पिशाचास्तत्पथि स्थिताः।
भूमौ तत्पृथुना सर्वं निरस्तं महितात्मना ॥ २३८ ॥
पुनः कलियुगे प्राप्ते त्वष्टाविशंतिमे पुनः।
वैवस्वतस्य समये जाताः क्रोधवशा भुवि ॥ २३९ ॥
व्यापयन्ति दुरात्मानो मणिमांस्तत्पुरस्सरः।
तथा च श्रीमदाचार्यैरुक्तं वेदप्रवक्तृभिः ॥ २४० ॥

## सर्वज्ञाभिमतश्लोकोदाहरणम्।

नृहरिः सकलज्ञनामकः समुपैति हि मायिदानवान्।
प्रपलायनमत्र तत्क्षमं त्वरया वो वसतिर्गुहासु च ॥ २४१ ॥
मायावादतमोव्याप्तमिति तत्त्वदृशा जगत्।
भातं सर्वज्ञसूर्येण प्रीतये श्रीपतेः सदा ॥ २४२ ॥
इत्यतो मायिनं नैव प्राप्नुयाद्गुरुवीप्सया।
तम एव ततो यस्मान्निश्चयादाप्यते ध्रुवम् ॥ २४३ ॥
मायाभिरुत्सिसृप्सत इन्द्राद्या मारुरुक्षतः।
अवदस्युरधूनुथाः ॥ २४४ ॥
उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु।
अथेन्वा चरति माययैष वाचं शुश्रुवां अफलामपुष्पाम् ॥ २४५ ॥
यस्तित्याजसचिविदं सखायं न तस्य वाच्यपि भागो अस्ति।
यदीं श्रृणोत्यलकं श्रृणोति नहि प्रवेद सुकृतस्य पन्थाम् ॥ २४६ ॥

## मिथ्यावादिसङ्गनिषेधः।

अथ ये चान्ये मिथ्यातर्कैर्दृष्टान्तैः कुहकेन्द्रजालैः।

वैदिकेषु परिस्थातुमिच्छन्ति तैस्सह न संवसेत् ।
प्राकाश्या ह्येते तस्करा अस्वर्ग्या इति ह्याह ।। २४७ ।।
नैरात्म्यवादकुहकैर्मिथ्यादृष्टान्तहेतुभिः ।
भ्राम्यन् लोको न जानाति वेदविद्यान्तरं तु त(य) त् ।। २४८ ।।
इत्यद्धा श्रुतयश्चाहुरेतमर्थं तु मायिनाम् ।
गुरुत्वानधिकारित्वं वेदबाह्यत्वमेव च ।। २४९ ।।
जिज्ञासा चाधिकारो गुरुरपि गिगमा ब्रह्मसूत्राणि शिष्या
ज्ञानं चाज्ञानभक्तिः सह निखिलजगद्बन्धनान्मुक्तयवस्था ।
एषां ते सत्यभूता निखिलगुणविभोर्ज्ञानतः कल्पिता वै
यद्वत्स्वप्नस्सहेरन् कुमतमिदमथो मायिनां केऽत्र भव्याः ।। २५० ।।

## गुरुलक्षणम् ।

मन्दमध्योत्तमत्वेनेत्यादिनोक्तं तु लक्षणम् ।
गुरोरपि समं प्राहुर्वेदवेदार्थपारगाः ।। २५१ ।।
द्वात्रिंशल्लक्षणैर्युक्तो गुरुरुत्तम उच्यते ।
ब्रह्मैव तादृशस्तस्य समो नान्योऽस्ति कश्चन ।। २५२ ।।

## अवरगुरुस्वीकारनिषेधः ।

क्रमादूनगुणास्त्वन्य ईरिता गुरवः क्रमात् ।
यावद्गुणाः सप्तदश तदूनोऽवर इष्यते ।। २५३ ।।
स्वस्मादेवाधिकं शिष्यः प्रायान्नैव स्वतोऽवरम् ।
उत्तमं तु गुरुं प्राप्य न ततोऽवर इष्यते ।। २५४ ।।

## गुरुविचारः ।

पूर्वस्मादुत्तरो लब्धः स्वयमेव गुरुर्यदि ।
गृहणीयादविचारेण विकल्पः समयोर्भवेत् ।। २५५ ।।
अनुज्ञयैव पूर्वस्य प्राप्नुयाद्गुरुमुत्तमम् ।

गुरूलङ्घनदोषः स्यादन्यथाप्राप्तितो महान्॥ २५६ ॥
उत्तमं तु गुरुं प्राप्य त्यक्त्वा तं मोहतोऽवरम्।
प्राप्य दोषेण संयाति निरयं नात्र संशयः॥ २५७ ॥
गुरोरनुज्ञामाप्यापि(ज्ञानाथापि ?) ह्यवज्ञायैव गच्छति।
अवज्ञादोषतस्तस्य गुरोर्याति तमो ध्रुवम्॥ २५८ ॥
तथाह भगवान् स्कान्द उमायै शङ्करः प्रभुः।
एकादश्यादिधर्मैस्तु वदन् प्रीतिं परां हरेः॥ २५९ ॥
स्वस्यापि दोषैरेतैः स प्रीतेर्हानिं च सोऽवदत्।
अर्थतः सर्वधर्माणां दोषैरेतैर्विहीनताम्॥ २६० ॥
तमः प्राप्तिं तथा चाह नात्र कार्या विचारणा।
नच तस्मात्प्रियमतः केशवस्य ममापि वा॥ २६१ ॥
अन्यदैवतसामान्यं यदि विष्णोर्न पश्यति।
गुरून्वा नावजानाति न चैवं वेत्ति मानुषम्॥ २६२ ॥

## गुर्ववज्ञानेऽनर्थकथनम्।

अवज्ञानाद्दरं प्रोक्तमवज्ञानाद्गुरोर्गतिः।
शिष्यस्योक्ता न चाण्वी वा गुरौ कलुषिते हरिः॥ २६३ ॥
कलुषी नरकं दद्यात्तत्रस्थः केशवः स्वयम्।
मन्त्राश्च न फलन्त्यस्य शुभा मोक्षादिदायकाः॥ २६४ ॥
तस्माद्विद्वेषिणं विष्णोर्गुरोर्वेदस्य चापि वा।
दोषिणं वा विना नैव गुरुस्त्याज्यः कथञ्चन॥ २६५ ॥

## शिष्यस्वरूपकथनम्।

एवमुक्तस्तु शिष्योऽपि संशेते नात्र शास्त्रवित्।
भक्तश्चेत्तत्र सन्यस्तो माधवे(वो) देवपक्षगः॥ २६६ ॥
विबुभूषु(भुक्षु) र्दयावांश्च शक्यं चेद्गुरुणा सह।

तत्त्ववादिनमेवाथो प्राप्य तेनोक्तमार्गतः ॥ २६७ ॥
प्राजापत्यद्वादशकं चरेद्विष्णुं स्मरन् हृदा।
भूयो भूयो हरिं नत्वा प्रार्थयेदघनाशनम् ॥ २६८ ॥

## हरिनिन्दाप्रायश्चित्तम्।

नाहमेतावतीं वक्ष्ये निन्दने निष्कृतिं हरेः।
तथापि कालसम्बन्धान्निशशक्तानां च तन्द्रिणाम् ॥ २६९ ॥
मत्सराणां तथा स्वल्पबुद्धीनां विषयात्मनाम्।
दुर्मार्गे क्षिप्रगन्तॄणां सन्मार्गे मन्दचेतसाम् ॥ २७० ॥
स्वल्पामेव वदेद्धीतो निस्सत्वानां च निष्कृतिम्।
गुरोर्नीतिरशक्या चेत्स्वयमेव ततो व्रजेत् ॥ २७१ ॥
बहुनात्र किमुक्तेन सद्भिर्वेदार्थसिद्धये।
पुरुषैः सर्वथा कार्यस्तत्त्ववादिसमाश्रयः ॥ २७२ ॥

## योग्यादन्यगुरुनिषेधः।

तथाह भगवान्व्यासः त्यागे दु(दृ) ष्टयुरोर्वचः।
गुरूक्तमपि न ग्राह्यं यदनर्थेऽर्थकल्पनम् ॥ २७३ ॥
यदुक्त्या न प्रबुद्ध्येत यथान्धो ह्यन्धनायकः।
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ॥ २७४ ॥
उत्पथं प्रतिपन्नस्य सद्भिस्त्यागो विधीयते।
ततः सर्वप्रकारेण बुभूषु(भुक्षु) स्तत्त्ववादिनाम् ॥ २७५ ॥
विनान्यं न व्रजेत्तत्त्वजिज्ञासुस्तं व्रजेच्च सः।
प्राप्य तं विष्णुभक्तस्तु त्यजेत्सर्वं विरक्तिमान् ॥ २७६ ॥
पूर्वमेव विरागोऽस्य प्रसादाज्जायते यदि।
विष्णोस्तर्हि समस्तं च त्यक्त्वा तं गुरुमाप्नुयात् ॥ २७७ ॥
एवं हि विष्णुतीर्थेन प्रसादाद्गुरुकृष्णयोः।

शिष्यो गुरुश्चाधिकारी सम्मतोऽत्र निरूपितः ॥ २७८ ॥

नमो नमोऽशेषचिदेकसारगुणैकधाम्ने पुरुषोत्तमाय ।

स्वभक्तसंसारविनाशनाय परामृतानन्दपदप्रदायिने ॥ २७९ ॥

इति श्रीमद्विष्णुतीर्थीयसन्यासपद्धतौ अधिकारिकथनं नाम प्रथमोऽध्यायः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

॥द्वितीयोऽध्यायः ॥

नमोनमः सर्वसुरेषु योऽसौ स्थित्वा तु तत्तद्गुणतः समस्तम् ।

यज्ञादिभोगान्निखिलान्य एको भुङ्क्ते विष्णुर्देवदेवः परात्मा ॥ १ ॥

## ऋग्वेदिपरमहंससन्यासग्रहणप्रकारः ।

पूर्वेद्युर्भोजयेद्विप्रान् वैष्णवांश्च समाहितान् ।

दक्षिणां च ततो दद्याद्विष्णोः प्रीत्यर्थमेव सः ॥ २ ॥

## वपनम् ।

ततः स्मरन्वासुदेवं कृत्वा वपनकर्म च ।

सहश्मश्रुलोमनखं स्नायात्सम्यक्समाहितः ॥ ३ ॥

## मृत्तिकाग्रहणं

हस्तपादनखेष्वद्धा मुखे चैव मृदं क्षिपेत् ।

प्रतिप्रति द्विषट्कृत्वो वृषळस्पृष्टिशुद्धये ॥ ४ ॥

द्विषड्वारं तु संशोध्य मुखमाचमनात्ततः ।

मृदालिप्य निमज्जेच्च द्विषड्वारं शिरस्यतः ॥ ५ ॥

स्मृत्वा विष्णुं पाणिपादं प्रक्षाल्याचमनं चरेत् ।

उद्धतासीति मन्त्रेण मृदालिप्य शरीरगम् ॥ ६ ॥

अतो देवा इति सुरान् प्रार्थयेद्विष्णुमन्यया ।

तथा तदस्यापोऽस्मांस्त्रिभिः पादैरपोऽर्थयेत् ॥ ७ ॥

नत्वा चैतान् मृदं गृह्य नाभिदघ्नजले मृदम् ।

लोलयेत्कटिदघ्ने वा जानुदघ्नेऽथ वा ततः ॥ ८ ॥

## स्नानम्।

निमज्य त्रिरथाचम्य संस्मरन् परमं हरिम्।

प्राणानायम्य लिप्याथ ककुत्स्थां पूर्ववन्मृदम् ॥ ९ ॥

निमज्जंस्तज्ज(निमृज्य स्त्रिर्ज) पेत्सूक्तं ऋतुमित्यादिकं पुनः।

पुनश्चेति त्रिशस्सम्यगाचम्याथैवमेव हि ॥ १० ॥

चरणं पवित्रमिति च निमज्जन्नप्सु शायिनम्।

स्मरन् जपेदथात्मस्थमभिषिञ्चेच्च पादशः ॥ ११ ॥

हरिं पुरुषसुक्तेनोदिदाभ्या इति चोत्तरेत्।

वस्त्रमभ्युक्ष्य परिधायाचम्यात्मानमुक्षयेत् ॥ १२ ॥

## देवादितर्पणम्।

आपोहिष्ठेति तिसृभिस्तर्पयेद्देवतास्ततः।

ऋषीन्पितृन् व्याहृतिभिर्युक्तान् क्रमश एव हि ॥ १३ ॥

## जपः।

जपेच्च पौरुषं सूक्तं वैष्णवानि ततो जपेत्।

स्वस्तिवाचनमन्त्रेष्टं यदि कुर्यात्ततः परम् ॥ १४ ॥

## आहारः।

स्मृत्वा तु वासुदेवाख्यं प्रणवेन समाहितः।

सक्तुमुष्टिं समश्नीयादालभ्य हृदयं जपेत् ॥ १५ ॥

व्याहृतीरानयेत्क्षिप्रं दधिमिश्रं घृतेन च।

गायत्र्याः पादशोऽर्धर्चऋचा चेति पृथक्पृथक् ॥ १६ ॥

## आपस्तम्बानाम्।

तर्पयेद्देवताः षड्वै स्मृत्वा व्युत्क्रमतः पराः।

वासुदेवादिकाः सिंहवराहौ चाचमेत्पृथक् ॥ १७ ॥

## विरजाहोमप्रकारः ।

प्राणानायाम्य धीरो वा उपलेपादि कर्म च ।
आज्यसंस्कारपर्यन्तं कृत्वा पूर्णाहुतिं यजेत् ॥ १८ ॥
वासुदेवं स्मरन् पश्चाच्चतुर्मूर्तीः स्मरन्नपि ।
जुहुयाद्व्याहृतीः सर्वाः सर्वमाज्यं समापयेत् ॥ १९ ॥
सम्भाराः पूर्वमेवैते शिखिनः प्रागुदग्दिशि ।
निधाप्य वैणवो दण्डः कौपीनाच्छादने तथा ॥ २० ॥
अन्ये च ये तु सम्भारा हौम्या आज्यादिका अपि ।
अग्नीषोमौ च पुरुषं स्मृत्वान्वाधानपूर्वकम् ॥ २१ ॥
इध्मनां बन्धनां तन्तुकर्म कृत्वा ततो रवौ ।
अस्तं यातेऽग्नितः पश्चात्कार्ष्णं चर्म प्रसृत्य च ॥ २२ ॥
तच्चर्मणि तृणं न्यस्य निरसेन्मनुना तृणम् ।
प्रक्षाल्य हस्तं दर्भेषु प्राङ्मुखस्तूपविश्य च ॥ २३ ॥
ध्यायन् हरिं न स्वपन्स उदितेऽरुण एव च ।
स्नात्वा परिसमूहादि कर्म कुर्यात्स्मरन् हरिम् ॥ २४ ॥
निर्वापप्रोक्षणे स्यातां स्मृत्वा पुरुषमेव वै ।
अथाज्यभागपर्यन्तं कर्म सर्वं समानतः ॥ २५ ॥
भवेत्पुरुषसूक्तेन प्रत्यृचं जुहुयात्समित् ।
पूर्णाहुतिं च व्याहृत्या वासुदेवं स्मरन्यजेत् ॥ २६ ॥
पुनराज्येन जुहुयात्प्रत्यृचं तेन बुद्धिमान् ।
जुह्वामादाय हविषा प्रत्यृचं जुहुयात्पुनः ॥ २७ ॥
स्रुवेणैव तथाज्यं च पुरुषश्चक्षुदेवताः ।
ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥ २८ ॥

एवं हि शाखिनामाश्वलायननानां विशेषतः ।
बोधायनविशेषोऽपि प्रोच्यतेऽतः परं मया ॥ २९ ॥

## यजुर्वेदिसन्यासप्रकारः ।

दधिक्राव्णोऽकारिषमापोहीति ऋचस्तथा ।
वारुण्यश्च तथाप्याश्च चतस्रो वै प्रकीर्तिताः ॥ ३० ॥
पवमानस्सुवर्चन इत्याद्या दश सप्त च ।
समस्ता व्याहृतिश्च स्यान्नवोनव इतीतरा ।
स्वस्तिवाचनमन्त्राः स्युरेते बोधायने मते ॥ ३१ ॥

## सामवेदिसंन्यासप्रकारः ।

भवेदुल्लेखनं मध्ये पूर्वाशां प्रति दक्षिणे ।
उत्तरे च तथा मध्ये उत्तराशां च पश्चिमे ।
पूर्वे चैव हि षड्रेखाः शिखिनं तासु निक्षिपेत् ॥ ३२ ॥
उपस्थितिर्भवेदग्नौ ज्वलिते जुष्ट इत्यृचा ।
ब्रह्मणो ह्यन्यमन्त्राभ्यां निरासश्चोपवेशनम् ॥ ३३ ॥
अहेदैधिषव्योनियत इत्यादी तौ मनुस्मृतौ ।
सर्वत्र ब्रह्मणो मौनं ध्यानं विष्णोस्तु सर्वदा ॥ ३४ ॥
भवेद्वाचि विसृष्टायामतो देवा इति द्वयम् ।
तद्विष्णोरिति च द्वे वा विष्णो त्वमिति वा पराम् ॥ ३५ ॥
जपेद्विष्णुं परं ध्यायन् ब्रह्मादिनुतपद्वयम् ।
हुतयोरूर्ध्वसमिधौ मन्त्रवत्परिषिञ्चति ॥ ३६ ॥
अलङ्कृतं सम्यगग्निमदितेऽन्वादिमन्त्रकैः ।
दक्षिणे प्रथमं पश्चात्पश्चिमे चोत्तरे तथा ॥ ३७ ॥
सर्वतः प्रणवेनाथ जुहुयात्समिधः सुधीः ।
स्मृत्वा प्रजापतिं तूच्चैः स्वाहेति जुहुयादथ ॥ ३८ ॥

आघारमवघारं वा इन्द्राय जुहुयात्पुनः ।
चक्षुषी चाष्टभिर्मन्त्रैः हूयाद्युक्तो वहादिभिः ॥ ३९ ॥
व्याहृतीश्च द्वयं तत्र पौरुषे तु विशिष्यते ।
सूक्ते स्विष्टकृतो मन्त्रो हव्यवाहमिति द्वयम् ॥ ४० ॥
कृत्वानुयाजपर्यन्तं मन्त्रैरेतैर्यजेदथ ।
त्रयोदश जयाद्या वा अभ्यातानां दशाष्ट च ॥ ४१ ॥
द्वाविंशद्द्राष्ट्रभृतोऽपि यद्देवा विंशतिस्तथा ।
प्रजापते मनोज्योतिरयाश्चाग्नेस्तथा परः ॥ ४२ ॥
यदस्मिन् स्वस्तिनो यन्मे पुनरग्निव्याहृतयः ।
आभिर्गीर्भिरनाज्ञातं तथा पुरुषसम्मितः ॥ ४३ ॥
यत्पाकत्रा यदस्येति तानाज्यपरिधि न्यसेत् ।
सविशेषैश्च मन्त्रैस्तु परिषिञ्चति पूर्ववत् ॥ ४४ ॥
अग्नेरावाहने ब्रूयुरेकदामर्शनं च ते ।
मन्त्रश्च सविशेषः स्यादन्यत्सर्वं समानकम् ॥ ४५ ॥

## छन्दोगाख्यसामशाखिविशेषविधिः ।

छन्दोगानां विशेषोऽत्र प्रोच्यते ब्राह्मणाः समाः ।
आचार्यद्दत्तदर्भास्ते त्वर्चितं तूदकुम्भकम् ॥ ४६ ॥
सङ्गृह्य दर्भैर्नवभिर्जपेयुस्त्वृग्भिरादरात् ।
उपास्मा इति तिस्रो वै दविद्युतत्या रुचेति च ॥ ४७ ॥
पवमानस्य तदिस्त्रस्ततो दद्याज्जलादिकम् ।
उदगायशवा आपः सन्तु दीर्घायुरस्तु च ॥ ४८ ॥
गन्धाय चारिष्टमस्तु चाक्षताय तथैव च ।
सौमनस्यं तु पुष्पाय प्रत्येकं तु विना मनुम् ॥ ४९ ॥
दद्याज्जलं च स्वस्त्यादिमनुना दक्षिणादिकम् ।

मन आधीयतामादि जपेयुः सर्व एव च ॥ ५० ॥
एतैर्वा आदि चैवं तु पुण्याहादि ततः परम्।
स्वस्तिमादि पुनः सर्वे स्वस्त्यादि च भवेत्तथा ॥ ५१ ॥
एतेन वा आदि तथा ऋद्ध्यादि च तथा भवेत्।
प्रोक्षन्तामथ मन्त्रैस्ते गायत्री प्रथमा स्मृता ॥ ५२ ॥
आपो हीति त्र्यृचः सैतास्तरत्स इति चैव हि।
पावमान्यः षडेतोनुस्त्र्यृचः शन्नो परास्त्र्यृचः ॥ ५३ ॥
पवित्रं ते घृतवती तमुष्टवामापि चैव हि।
नकिरिन्द्रेति चैवान्या कयानास्तिस्र एव च ॥ ५४ ॥
भद्रं करणेभिः स्वस्तिनश्च पुण्याहमिति हि स्मृतम्।
लिप्ते सिकतमस्याथ समिधा शकलेन वा ॥ ५५ ॥
उल्लिखेत्प्रथमं प्राचीं दक्षे पश्चात्तथादितः।
उदीचीमन्ततः प्राचीं तिस्रः प्राचीश्च मध्यतः ॥ ५६ ॥
क्रमाद्दक्षिणतो ज्ञेया अग्निमाधाय पूर्ववत्।
अन्वाधायाद्व्याहतीभिः देवतास्मृतिपूर्वकम् ॥ ५७ ॥
बन्धनं बर्हिरादेस्तु भवेद्दर्भौ समिद्द्वयम्।
न्यस्याः समिद्भिः षोडशभिरमा परिधयोऽत्र हि ॥ ५८ ॥
न स्युरूर्ध्वे च समिधौ मनोरग्निं समूहयेत्।
इमं स्तोमादिभिर्मन्त्रैर्भूमिं स्पृश्य हविर्भुजः ॥ ५९ ॥
पश्चादन्त्याक्षरैः स्पृश्याच्चतुर्भिर्दिक्षु च क्रमात्।
पूर्वादिषु ततो भूमिं संस्पृश्य च जपेन्मनुम् ॥ ६० ॥
इदं भूमेरिति ततो ब्रह्माणमुपवेशयेत्।
आवसोरिति मन्त्रेण सीदेद्दक्षेऽग्नितो मुनिः ॥ ६१ ॥
त्रिभिर्वा पञ्चभिर्दर्भैः परिस्तीर्याग्निमग्रकैः।

छादयेद्दर्भमूलं तु निर्ऋतेर्दिशि चाग्नितः ॥ ६२ ॥
दर्भेषूत्तरतो द्वन्द्वं दिशि पात्राणि सादयेत् ।
स्रुवदर्व्योः प्रणीतार्थे कंसं चमसमेव वा ॥ ६३ ॥
स्थाल्यां चाज्यं न्यस्य चरोर्मेक्षणं चेध्मबर्हिषि ।
पवित्रेस्थोऽथ वैष्णव्या वीतिदर्भान् छिनत्ति च ॥ ६४ ॥
विष्णोर्मनसा पूतेस्थ इत्युन्मार्ष्टि जलेन तु ।
अथोत्तानानि पात्राणि सपवित्रस्तु प्रोक्षयेत् ॥ ६५ ॥
कमण्डलुजलेनाथो चरुनिर्वापणादिकम् ।
कृत्वाज्योत्पवनं कुर्याद्दिवास्त्येत्यादिमन्त्रतः ॥ ६६ ॥
विना तु पुनराहारमाज्यादिश्रयणं त्वथ ।
अग्निं हविः पाचकं च सयुज्यादन्यपावके ॥ ६७ ॥
जान्वाप्यमन्त्रैरग्निं च परिषिञ्चेत्पुरोक्तवत् ।
अन्यमन्त्रे विशेषोऽस्ति समिधं त्विध्मसंयुताम् ॥ ६८ ॥
तारेण हुत्वा स्वाहेति समिधो दश पञ्च च ।
आदाय चाभिघार्याथ ब्रह्माणं प्रब्रवीत च ॥ ६९ ॥
ब्रह्मन् होष्यामि तेनापि प्रत्युक्तो हूयतामिति ।
ओं स्वाहेति तु हुत्वाथ पूर्णपात्रं निधीयताम् ॥ ७० ॥
इध्मयुक्तान् समिद्दर्भान् करे सङ्गृह्य पुष्पकम् ।
भूमिस्थपूर्णपात्रं च जपित्वा प्रपदं शुभम् ॥ ७१ ॥
ध्यायन् सम्पूर्य तत्पात्रं पुष्पाद्यं तत्र निक्षिपेत् ।
प्रपदं तप आदि स्यादनुपानं भवेत्पुरा ॥ ७२ ॥
विरूपाक्षोऽसिपर्यन्तं स्थापयेत्पूर्ववच्च तत् ।
दर्भैरन्यैश्च सञ्छाद्य समिद्दर्भान् जुहोति तान् ॥ ७३ ॥
इध्माङ्गहोमः कर्तव्यो व्याहृतीभिस्त्रिभिस्तथा ।

बहिरास्तीर्य साद्याज्यं प्रधानो होम इष्यते ॥ ७४ ॥
अग्नये च स्विष्टकृत इति स्विष्टकृतो मनुः ।
हुत्वानुयाजसमिधं ततः पाहि त्रयोदशीम् ॥ ७५ ॥
यजेद्दश व्याहृतीश्च दशर्चस्य तथैव च ।
याज्या तूष्णीं समित्वं च प्राजापत्याहुतीर्यजेत् ॥ ७६ ॥
परिस्तृतीः समादाय चाग्राण्याज्ये समज्जत ।
अक्तं रिहाणा इति च मन्त्रेणानेन भिद्य च ॥ ७७ ॥
मध्यमूले च तावग्नौ यो भूतानामिति क्षिपेत् ।
असुभ्य इति मन्त्रेण होमशेषं समापयेत् ॥ ७८ ॥
विसृज्य रज्जुं हुत्वाग्नौ तूष्णीं च समिधं यजेत् ।
परिषेको भवेन्मन्त्रैर्विशेषोऽन्त्यमनोर्भवेत् ॥ ७९ ॥
गायेद्यदीन्द्रामिति च जपेद्दीर्घायुरादि च ।
ब्रह्मादीनां प्रदेयात्र दक्षिणोद्वाहयेच्च तम् ॥ ८० ॥
ब्रह्मन्नित्यादिमनुना प्रणीतां च समानयेत् ।
तामुपस्पृश्य सामानि गायेत्सम्यक्समाहितः ॥ ८१ ॥
कयान इति तिस्रोर्चो भद्रमित्यादिका परा ।
मार्जनादि त्रयस्त्रिंशदित्यादिमनुनामरान् ॥ ८२ ॥
स्तुत्वा गायेदायुरादिमनुमन्यांस्तथैव च ।
उक्ता तलवकाराणां विशेषः प्रायशो न हि ॥ ८३ ॥

## तलवकारसन्यासविधिः ।

विशेषः कश्चिदेवास्ति तं ब्रूयामावधारके ।
इन्द्रं पुरुषसूक्तं च नवर्चं प्राहुरत्र हि ॥ ८४ ॥
तथापि षोडशर्चं हि सर्वेषां सममेव हि ।
ततस्तेनैव जुहुयात् षोडशर्चेन सर्वथा ॥ ८५ ॥

अन्यत्सर्वं समानं स्यान्न विशेषोऽस्ति कुत्रचित् ।
स्वस्तिवादस्तृणस्यापि निरासश्चोपवेशनम् ॥ ८६ ॥

प्रवाहनं तु वह्नेश्च यथाशाखं विधीयते ।
स्थालिपाको यथा प्रोक्तः शाखायां तद्वदेव हि ॥ ८७ ॥

सूक्तहोममृते ज्ञेयः पुरुषः सूक्तदेवता ।
सर्वशाखासु चैवं हि जानीयात्कर्मबुद्धिमान् ॥ ८८ ॥

यथाग्निमेकहस्तेन प्रताप्यायन्त इत्यृचा ।
संस्पृशेन्मुखमारभ्य यावद्धृदयमञ्जसा ॥ ८९ ॥

## अग्निमूर्तिध्यानम् ।

तूष्णीं द्विः संस्पृशेद्ध्यायेत्तमग्निं दक्षिणे करे ।
बिभ्राणं शक्तिमभयं रक्तवर्णं सुभूषितम् ॥ ९० ॥

## प्रैषोच्चारणप्रकारः ।

ततःप्रभृति यावत्तु गुरोर्विद्यामवाप्नुयात् ।
तावत्स वाग्यतस्तिष्ठेज्जपेत्प्रैषां ततःपरम् ॥ ९१ ॥

अनिरुद्धादिनामानि चतुर्थ्यन्तानि मूलतः ।
सव्याहृतीनि सन्यस्तं मयेत्येतास्तु देवताः ॥ ९२ ॥

उद्दिश्य सर्वमर्घ्यं स्यात्तद्विभागं ब्रवीम्यहम् ।
अनिरुद्धाय वित्तं च शरीरं च समर्पयेत् ॥ ९३ ॥

## अनिरुद्धनामनिर्वचनम् ।

सर्वचेष्टकरूपत्वादनो वायुरुदाहृतः ।
तद्धाननिर्हरिः स स्याद्रुद्धश्चैव स्वभक्तकैः ।
शत्रुभिः सोऽनिरुद्धश्चेत्यनिरुद्धः प्रकीर्तितः ॥ ९४ ॥

## प्रद्युम्ननामनिर्वचनम् ।

प्रद्युम्नायेन्द्रियाण्येव तैजसानि दशार्पयेत् ।

द्योतनत्वाज्ज्ञानवत्त्वात्प्रद्युम्न इति कीर्तितः ॥ ९५ ॥

## सङ्कर्षणनामनिर्वचनम्।

सङ्कर्षणायेत्यर्घ्यं हि मनआदि चतुष्टयम्।
सम्यग्ज्ञानस्वरूपत्वादानन्दत्वात्स केशवः।
सम्यक्कर्तृस्वरूपत्वात्सम्यग्ग्रहणरूपतः ॥ ९६ ॥
सम्यक्प्राणस्वरूपत्वात्सम्यक्च बलरूपतः।
संकर्षण इति प्रोक्तः स्वयमेवार्पयेत्ततः ॥ ९७ ॥

## वासुदेवनामनिर्वचनम्।

वासुदेवाय महते सर्वत्रापि च वासनात्।
वर्तकत्वाच्च सर्वस्य प्राणदेवत्वतस्तथा।
वासुदेवस्स विज्ञेयः ज्ञानिनां मोक्षदो हरिः ॥ ९८ ॥

## अभयदानम्।

दद्याद्भूताभयं चाम्बुपूर्णेनाञ्जलिना स्मरन्।
प्रीयतां वासुदेवो म ईशानीं दिशमेव ताम् ॥ ९९ ॥
निनीयादभयं सर्वभूतेभ्य इति मन्त्रतः।
सर्वभूतेषु विष्णोस्तु विशेषावस्थितेः सदा।
तत्रस्थं केशवं ध्यायन् सर्वभूतानि न द्रुहेत् ॥ १०० ॥
अथैशानीं दिशं गच्छेत्पुण्यतीर्थजलाशयम्।
दण्डादिकं तमन्वेव नयेयुर्ब्राह्मणास्ततः ॥ १०१ ॥

## प्रैषोच्चारणानन्तरं कर्तव्यकर्मविवेकः।

आचम्य विष्णुं तीर्थेशं नत्वा देवांश्च सर्वशः।
निमज्याप्सु त्रिशो हस्ते शिखायज्ञोपवीतके ॥ १०२ ॥
आदाय जुहुयादप्सु प्रणवेन समाहितः।
सस्वाहेन पटाद्यं च त्यक्त्वा सर्वं स उत्तरेत् ॥ १०३ ॥

दीयमानं तु गृह्णीयात्कौपीनाच्छादनादिकम् ।
इन्द्रस्य वज्रोऽसि तथा सखामेत्यादिमन्त्रतः ॥ १०४ ॥
दण्डं हरेद्युग्मपर्वं सुपार्श्वं चापि किञ्चन ।
सर्वतः सत्वचं वृत्तमृजुलोमप्रमाणकम् ॥ १०५ ॥
मन्त्रार्थो वर्ततेतस्य वासुदेवव्यपेक्षया ।
अथ स्नात्वा यथावत्स तर्पयित्वा हरिं परम् ॥ १०६ ॥

## गुरुपसत्तिः ।

नत्वा विष्णुं च संस्तूय प्रव्रजेदन्तिकं गुरोः ।
युक्तो गृहीत्वा समिधो दन्तकाष्ठानि वा यतिः ॥ १०७ ॥
दण्डे च जोळिकां नह्य कौपीनं चाङ्गवस्त्रकम् ।
सम्यक् बध्वान्तिकं याते सव्याग्रं च नतं तथा ॥ १०८ ॥
ब्रह्माञ्जल्या गृहीत्वा तं दोर्दण्डे सव्य एव च ।
निधाय वस्त्रं त्वन्येन चाच्छाद्य कटिमञ्जसा ॥ १०९ ॥
यो य एवोत्तमः प्रोक्तस्तं गुरुं प्राप्य वन्दयेत् ।
ततो दण्डादिकं सर्वं न्यस्य स्रस्ताम्बरः स्वयम् ॥ ११० ॥
पूर्वं नत्वा गुरुं सम्यक् गुरूंश्च परमादरात् ।
निधाय समिधस्तत्र विना भूमौ पटादि च ॥ १११ ॥

## गुरुवन्दनम् ।

नमेत्पश्चाङ्गतो भक्तया प्रथमं हृदयाञ्जलिः ।
वामोपर्यन्यपादश्च पादयोर्ग्रहणं ततः ।
चतुश्चतुर्जानुतो वै तलमामर्दनं भवेत् ॥ ११२ ॥
बहुशो वा दृढः सम्यग्दक्षबाहुपुरस्सरम् ।
प्रत्येकं दक्षहस्तेन रजः शिरसि धारयेत् ॥ ११३ ॥
चतुश्चतुर्नमेत्पश्चाद्द्वादशद्विगुणं शतम् ।

सहस्त्रं वाथ हस्ताभ्यां दक्षोच्चाभ्यां पदद्वयम् ।। ११४ ।।

गृहीत्वा धारयेत्केतु दक्षांसे सव्य एव च ।

करे (कण्ठे) चैवं त्रिशः केच पुनर्न्यस्य स्मरेद्धरिम् ।। ११५ ।।

प्रार्थयेद्विष्णुभक्तयादि पुनः कुर्यान्नतित्रयम् ।

तेनोक्तः प्रणमेद्विष्णुं द्विगुणं वाधिकं तथा ।। ११६ ।।

ततोऽनुज्ञामवाप्याथ तदुक्त्योपविशेत्ततः ।

दर्भेषूत्तरमूलेषु दक्षभागे गुरोर्मुखम् ।। ११७ ।।

समाहितस्तस्य वीक्षन् ब्रह्माञ्जलिपुटस्तथा ।

ततो गुरून्नमस्कृत्य हरिं स्वगुरुमेव च ।

विष्णोश्चैव तथानुज्ञामादाय गुरुतस्तथा ।। ११८ ।।

## प्रणवाद्युपदेशः ।

प्रब्रूयाद्ब्रह्म परममेकवारं सनातनम् ।

तारतम्यं त्रिवारं वा चतुर्वारमथापि वा ।

तन्त्रसारोक्तमार्गेण गायत्रीमथवा पराम् ।। ११९ ।।

नारायणाष्टाक्षरं च वैष्णवं च षडक्षरम् ।

द्वादशार्णं व्याहृतिश्च षडेते मनवोऽखिलैः ।। १२० ।।

मुमुक्षुभिः सदा जप्या यतिभिस्तत एव हि ।

वक्तव्या गुरुणा सम्यक्पुनर्नत्वा च पूर्ववत् ।

अनुज्ञातेऽन्तिके विष्णोः परिवार्य गुरुं सदा ।। १२१ ।।

## हंससन्यासविधिः ।

हंसानामथ वक्ष्यामि विशेषं कर्मणि स्फुटम् ।

यज्ञोपवीतेन विना हवनं तूदके स्मृतम् ।। १२२ ।।

अन्यस्य ग्रहणं च स्यात्पूर्ववद्गुरुरप्यसौ ।

एकाक्षरमृतं पञ्च मन्त्रांस्तस्य वदेच्च हि ।। १२३ ।।

यदि साधुर्विनीतश्च शान्तो दान्तोऽन्यथापि तु ।
गायत्री च तथाष्टार्ण उपदेश्यौ हरेर्मनू ॥ १२४ ॥

## त्रिदण्डियतिक्रमः ।

त्रिदण्डिनां विशेषोऽयं दण्डः शिक्यकमण्डलम् ।
कौशेयमासनं चैव पवित्रं जलपावनम् ॥ १२५ ॥
वस्त्रं वालाबवं पात्रं शिक्ये भिक्षाटनाय वै ।
यज्ञोपवीतं दण्डानि शुक्लानि जलपावनम् ॥ १२६ ॥

## कुटीचकयतिक्रमः ।

कुटीचकस्तु पुत्रेण बन्धुना सोदरेण वा ।
नियत्या दीयमानं तु कुर्याद्भिक्षां नवान्यथा ॥ १२७ ॥
इति कर्म यतीनां हि प्रोक्तं सम्यक्प्रविस्तरात् ।
अथ वक्ष्यामि चाचारं नित्यकार्यं च सर्वथा ॥ १२८ ॥
अनन्तशीर्षाघ्रिकराय भूम्ने सर्वज्ञरूपाय समस्तवेत्रे ।
अनन्तयज्ञादिभुजे नमस्ते स्वभक्तसन्तापदुरिष्टहन्त्रे ॥ १२९ ॥

इति श्रीमद्विष्णुतीर्थीयसन्यासपद्धतौ होमप्रकारो नाम द्वितीयोऽध्यायः ।।

॥ श्रीकृष्णार्पणमस्तु ॥

॥तृतीयोऽध्यायः ॥

सृष्ट्वा विष्णुः सर्वमिदं जगच्च ब्रह्मादिकं वर्णचतुष्टयेन ।
युतं सदाचारमचीक्लृपपद्यो विशेषसामान्यतया स नोऽव्यात् ॥ १ ॥

## ब्रह्मचार्यादिसदाचारशिक्षा ।

रवेरुदयतोऽर्वाक्तु मुहूर्ते पञ्चमेऽथ वा ।
यामेवापूर्वतोऽर्धे च सर्वथोत्थाय तं हरिम् ।
स्तुवीत पुण्डरीकाक्षं सर्वमाङ्गल्यरूपिणम् ॥ २ ॥

## मलविसर्गः ।

अथ गच्छेच्च निऋतेराशां दूरतरां पथा ।
कट्या ऊर्ध्वं तु वस्त्रेण प्रावृत्य विसृजेन्मलम् ॥ ३ ॥
वाग्यतः शिरसो वस्त्रं न त्यजेन्मूत्रकेऽपि च ।
न केवलधरायां तु त्यजेन्मूत्रपुरषीके ॥ ४ ॥
उत्तराशामुखो भूत्वा त्वहस्सन्ध्यासु चान्यथा ।
निशायां तत आगच्छेद्वस्त्रेणच्छाद्य सर्वतः ॥ ५ ॥
जान्वोरूर्ध्वं विना चास्यं शौचात्पूर्वं गुरुं यदि ।
स्वज्येष्ठानथ वा दृष्ट्वा समीपप्राप्तितः पुरा ॥ ६ ॥
सर्वोऽपि वाग्यतो मूर्ध्नो वस्त्रं दूरत एव हि ।
त्यजेदधोमुखो गत्वा शौचं कुर्याद्यथाविधि ॥ ७ ॥

## पुरीषशौचे मृत्तिका ।

स्वेनैव पूर्वमथ वा शिष्येण स्थापितां मृदम् ।
सङ्गृह्य लिङ्गे प्रथममेककृत्वो मृदं क्षिपेत् ॥ ८ ॥
पञ्चापाने दश करे उभयोस्सप्त चैव हि ।
एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणः ।
वानप्रस्थस्य त्रिगुणं यतीनां तु चतुर्गुणम् ॥ ९ ॥
एकदा गृहिणो भूयो लिङ्गशौचं विधीयते ।
तत्रापि द्विगुणादिः स्यादेकदादि तथैव च ॥ १० ॥

## मूत्रे मृत्तिकाविधिः ।

मूत्रे चैषां करे त्रिः षडष्टापि दश हस्तयोः ।
द्विश्चतुः षट् च सप्तापि चान्त्य एव करे मृदम् ॥ ११ ॥
क्षिपेन्मानं मृदोऽपि स्यात्क्रमान्मूत्रपुरीषयोः ।
प्रसृत्यर्धं च तावच्च ह्यारभ्यामलकं भवेत् ॥ १२ ॥
आर्द्रं यावत्तळेनाथ नैव मूत्रादि शोधयेत् ।

त्रिशः पदोरधश्चैव तथोपरि मृदं क्षिपेत् ॥ १३ ॥
सव्यहस्तेन च मृदा शोधयित्वा पदो स्थले ।
सदा पुरीषशौचे तु जान्वोः प्रक्षाळयेदधः ।
हस्तं मृदा च प्रक्षाल्य चक्षुषी नासिके तथा ॥ १४ ॥

## न्यासिनामापचमनम्

त्रिश आस्यं तथाचामेदृग्वेदादित्रिभिः क्रमात् ।
स्वाहायुक्तैश्चतुर्थ्यन्तैः पादौ च प्रोक्षयेदधः ॥ १५ ॥
यज्ञायेति नमोऽन्तेन मनुना सम्मृजेन्मुखम् ।
तिर्यग्दिशस्तथैवाधश्चैकशो मनुभिस्त्रिभिः ॥ १६ ॥
व्याहृत्याख्यैः कमाद्विष्णुं स्मरन् सर्वामरेष्वपि ।
अङ्गुष्ठोपकनिष्ठाभ्यां सूर्यायेत्यक्षिणी स्पृशेत् ॥ १७ ॥
अङ्गुष्ठमध्यमाभ्यां च ह्यश्विभ्यामिति नासिके ।
अङ्गुष्ठतर्जनीभ्यां तु कर्णौ सोमाय चैव हि ॥ १८ ॥
अङ्गुष्ठमध्यमाभिस्तु प्रजापतय इत्यथ ।
गुह्यं शिरस्तु सर्वाभिर्देवेभ्य इति मन्त्रतः ॥ १९ ॥
अङ्गुष्ठेनाथ भुजयोरिन्द्रायेति तु मूलतः ।
मन्त्राणां तु नमोऽन्ते स्यात्पुनरेवं विधीयते ॥ २० ॥
सर्वेषां मूलमन्त्रेण प्राणायामो भवेत्त्रिशः ।
पुनराचा च परमहंसानां प्रणवेन तु ।
आचामाद्यखिलं प्रोक्तं स्नानादन्यत्तथैव च ॥ २१ ॥

## दन्तधावनम् ।

ऋते दिनद्वयं विष्णोर्धावनं च दतां भवेत् ।
यतीनां वनिनां चापि गृहिणामष्टमीं तथा ॥ २२ ॥
चतुर्दशीं पञ्चदशीं जन्मर्क्षाणि रविक्रमम् ।

भवेन्न शोधयेद्ब्रह्मचारी व्रतधरस्तथा ॥ २३ ॥
तिष्ठन्मृदादिना नैव शोधयेदास्यमम्बुना ।
पूरयित्वा न चोत्तिष्ठेत्पुनराचमनं चरेत् ॥ २४ ॥

## स्नानम् ।

मृदं निर्मथ्य कक्षे तु लिप्य प्रक्षालयेत्त्रिशः ।
मृदं तु शिर आरभ्य लिम्पेत्सर्वशरीरके ॥ २५ ॥
मृदं गृह्य गुरुन्नत्वा हरिं च तदनुज्ञया ।
अवतीर्य जलं नद्यामाभिमुख्यं भवेदथ ॥ २६ ॥
अन्यत्र च रवेरीषन्मृदं तत्र विलोळयेत् ।
स्मृत्वा नारायणं देवं प्रणवेन निमज्जति ॥ २७ ॥
त्रिश आचम्य च हरिं स्मृत्वा प्राणांस्त्रिशो यमेत् ।
मृदं लिप्य त्रिशो विष्णुं स्मरन्मग्नोऽप्सु सञ्जपेत् ॥ २८ ॥
तारमष्टोत्तरशतं चत्वारिंशदथापि वा ।
अष्टाविंशतिमेवापि नवकृत्वो निमज्य च ॥ २९ ॥
प्रतिप्रतिजपंस्तारं पुनराचम्य पूर्ववत् ।
मज्जनादि पुनस्तद्वत्कुर्याद्विष्णुं हृदि स्थितम् ॥ ३० ॥
अभिषिञ्चेच्च तेनैव मनुनाष्टोत्तरं शतम् ।
अष्टाविंशतिमेवाथ कुर्याच्छिरः (शिरसि त्रिः) त्रिशस्तथा ॥ ३१ ॥
असंयोर्मुख एवाथ कुर्यात्पुण्ड्रं मृदेन तु ।
उत्तीर्याचमनं कृत्वा वस्त्रेणास्यादि शोधयेत् ॥ ३२ ॥
आचम्यायाम्य प्राणांश्च पुनराचमनं चरेत् ।
हंसादीनां यतीनां च ब्रह्मचार्यादिनामपि ।
पूर्वोक्तेनैव मार्गेण भवेत्स्नानविधिः परः ॥ ३३ ॥

## ऊर्ध्वपुण्ड्रधारणम् ।

मृदा गोपिकया चोर्ध्वपुण्ड्रं कुर्यात्समाहितः ।
के ललाटे च नाभौ च हृदये कण्ठ एव च ।
दक्षपार्श्वे भुजे कण्ठे सव्यपार्श्वे भुजे गळे ॥ ३४ ॥
पृष्ठमूले च कण्ठे च स्तनपार्श्वे तथैव च ।
स्थानानि चैवमुक्तानि वच्मि सामान्यतः क्रमात् ॥ ३५ ॥

## ऊर्ध्वपुण्ड्रधारणमन्त्रः ।

वासुदेवः केशवश्च सनारायणमाधवः ।
गोविन्दश्चैव विष्णुश्च मधुहन्तृत्रिविक्रमौ ॥ ३६ ॥
वामनः श्रीधरश्चैव हृषीकेशोऽब्जनाभकः ।
दामोदरश्च श्रीवत्सश्चतुर्थ्यन्ताश्च सर्वशः ।
नमोऽन्ताः कौस्तुभायेति सव्यस्तनमुपैव वा ॥ ३७ ॥

## शङ्खचक्रधारणे मन्त्रः ।

बाह्वोर्मूले चक्रशङ्खौ धरेन्मन्त्रौ च तौ स्मृतौ ॥ ३८ ॥
धरशब्दस्तदन्ते तु चतुर्थ्यन्तो नमोयुतः ।
अर्थेऽस्मिन् सन्ति नामानि तत्र तत्रोदितानि वै ॥ ३९ ॥

## गोपीचन्दनमहिमा ।

गोपीचन्दनलिप्ताङ्गो यं यं पश्यति चक्षुषा ।
तं तं शुद्धं विजानीयान्नात्र कार्या विचारणा ॥ ४० ॥
ब्रह्मन् वृत्रभयात्सर्वे वयं त्वां शरणं गताः ।
महता तपसा त्वष्टुरवध्यस्य महात्मनः ॥ ४१ ॥
वधाय तस्य वृत्रस्य पृच्छामोऽत्र विधे विधिम् ।
इत्युक्तः सोऽवदद्ब्रह्मा सर्वलोकपितामहः ॥ ४२ ॥
वधोपायं हि देवेभ्यो वृत्रस्याद्भुतकर्मणः ।
देवाः श्रृणुत भद्रं वो वधोपायं रिपोः परम् ॥ ४३ ॥

प्रोक्तं तु विष्णुना पूर्वं सर्वदा धृतमेव मे ।
मधुघ्न(घ्नो) नामभिर्देहे धृत्वा तद्धृतचन्दनम् ॥ ४४ ॥
चक्रशङ्खौ तथास्ये तु कण्ठे पद्माक्षमेव च ।
हरेर्नामानि च मुखे ततो वृत्रं हनिष्यथ ॥ ४५ ॥
एवमुक्तास्तु ते देवास्तथा कृत्वा महौजसः ।
तत्रतत्र स्थितं वृत्रं निजघ्नुर्विष्णुदेवताः ॥ ४६ ॥
तस्मात्सर्वैश्च कार्याणि नरैस्तानि बुभूषु(मुक्षु) भिः ।
न विशेषोऽत्र वर्णानामाश्रमाणां तथैव च ।
अयं भागवतो धर्मः सङ्क्लृप्तो हरिणा स्वयम् ॥ ४७ ॥

## चक्रादिधारणप्रमाणानि ।

ये शङ्खचक्राङ्कितबाहुमूलाः कण्ठावलम्बिसरसीरुहबीजमालाः ।
ये वा ललाटफलके रचितोर्ध्वपुण्ड्राः ते वैष्णवा भुवनमाशु पवित्रयन्ति ॥ ४८ ॥

## ऊर्ध्वपुण्ड्राधारणे प्रत्यवायः ।

इति ब्रह्माण्डवचनं पवित्रं त इति श्रुतिः ।
अकृत्वा चोर्ध्वपुण्ड्रं तु नैव कुर्याज्जपादिकम् ॥ ४९ ॥
जप्तं दत्तं हुतं ध्यातं देवार्चा पितृतर्पणम् ।
व्यर्थं भवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम् ॥ ५० ॥
ऊर्ध्वपुण्ड्रविहीनस्य श्मशानसदृशं मुखम् ।
अवलोक्य मुखं तेषामादित्यमवोलकयेत् ॥ ५१ ॥

## तिर्यक्पुण्ड्रनिषेधः ।

तिर्यक्पुण्ड्रं न कुर्वीत सम्प्राप्ते मरणेऽपि च ।
न चान्यन्नाम विब्रूयात्पादान्नारयणादृते ॥ ५२ ॥
तिर्यक्पृण्ड्राद्गतिस्तिर्यगूर्ध्वपुण्ड्रादथोर्ध्वगा ।
मुद्रा हि ध्रियते नित्यं ब्रह्मनाड्यनुसारिणी ।

इति श्लोकाश्च बहुशो ज्ञायन्ते व्यासनिर्गताः ॥ ५३ ॥

## भस्मधारणम् ।

तद्ब्रह्मचारिणो नित्यमूर्ध्वपुण्ड्रं तु भस्मना ।
कुर्युरित्येवमाचार्यमतं सद्भिः पुरा कृतम् ।
कैरळं तौळवं देशं विनान्यत्राधुनापि हि ॥ ५४ ॥

## भस्मधारिणां कुत्सितत्वम् ।

क्रियते मध्यभूमौ हि ब्राह्मणा वेदपारगाः ।
विशिष्टाश्च ततो ये ये पश्चात्पश्चादिहागताः ।
तेषां तेषां विशिष्टत्वमेतदीया हि कुत्सिताः ॥ ५५ ॥

## त्रिपुण्ड्रधृतेरासुरमतत्वम् ।

गोपिकां चैव लिप्यन्ति न तत्रापि हि चन्दनम् ।
आग्रहादेव देशेऽस्मिन् विना मानं भणन्ति हि ॥ ५६ ॥
नैवोच्यते विशेषस्तु ब्रह्मचारिण एव हि ।
कुत्रापि चोच्यते साम्यात् त्रिपुण्ड्रं यत्र कुत्रचित् ॥ ५७ ॥
तदासुरविमोहाय ग्रन्थेऽन्यत्र निगद्यते ।
असुराणां मोहनार्थं त्रिपुण्ड्रं विहितं पुरा ॥ ५८ ॥
तत्त्रिपुण्ड्रं न कुर्वीत सम्प्राप्ते मरणेऽपि च ।
तद्ब्रह्मचारिणो नित्यमूर्ध्वपुण्ड्रो विधीयते ॥ ५९ ॥

## मूलमन्त्रेण तर्पणम् ।

ततस्तु मूलमन्त्रेण तर्पयामियुतेन तु ।
तर्पयेत्परमं देवं नारायणमनन्यधीः ॥ ६० ॥
पुनराचम्य कौपीनमङ्गवस्त्रं निपीड्य च ।
विधूय पुनराचम्य मृदं प्रक्षाळयेत्ततः ॥ ६१ ॥
नोचेच्छौचाच्छुचिर्नैव ध्यात्वा देवं हृदि स्थितम् ।

तीर्थस्थमभिवन्द्याथ गच्छेद्देवालयं प्रति ॥ ६२ ॥
मठं वा यदि सम्यक्तु बुद्धेरेकाग्रता भवेत् ।
सदण्डस्तु गुरूञ्ज्येष्ठान् पूर्ववच्चाभिवन्द्य ह ।
कौपीनादि च विस्तृत्य देवायार्घ्यं प्रदीयताम् ॥ ६३ ॥

## तुलसीनिर्माल्यधारणम् ।

त्यक्त्वा पुष्पाणि शिरसि धारयन् कर्णयोरपि ।
जिघ्रेत्पौराणिकान् श्लोकान् प्रामाण्याय वदामि च ॥ ६४ ॥

## तुलसीनिर्माल्यधृतौ प्रमाणम् ।

पूर्वविद्धा यथा नन्दा शतजन्मार्जितं फलम् ।
तथा दहति पापं च तुळसी मूर्ध्नि संस्थिता ॥ ६५ ॥
निर्माल्यं वासुदेवास्य कर्णयोर्मूर्ध्नि वा गळे ।
तुळसी तु विशेषेण याम्याः किं तस्य कुर्वते ॥ ६६ ॥
नैवेद्यमुदरे विष्णोर्मुखे नाम तथैव च ।
पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः ॥ ६७ ॥

## जपार्थमासनम् ।

अथ शुद्धस्थळे शुद्धपीठे तूपविशेद्ग्रहः ।
पद्मस्वस्तिकवीराह्वा आसनेषु प्रधानकाः ॥ ६८ ॥
तेषामेकतरं भाव्यं मनो यत्र प्रसीदति ।
प्राङ्मुखो वाथवोदङ् वा प्रागुदङ्मुख एव वा ॥ ६९ ॥

## गुरुवन्दनपापनिरसनादि ।

अभिवन्द्य हरिं चैव गुरुं चापि यथाक्रमम् ।
अथात्मशुद्धये कुर्याच्छोषणं दहनं प्लुतिम् ॥ ७० ॥

## तत्वन्यासादि ।

तत्त्वन्यासं चाक्षराणां प्राणायामो भवेदथ ।
पञ्चाङ्गमूलन्यासौ च ध्यायेदक्षयमच्युतम् ॥ ७१ ॥
सच्चिदानन्दरूपं तु ब्रह्म दिव्यं सनातनम् ।
यथोऽदितं तु गुरुणा यथायोग्यं यथामति ।
यावत्तु दृश्यते रूपं तावद्ध्यानं ततः परम् ॥ ७२ ॥

## जपः ।

जपेदेकाक्षरं मन्त्रमन्यान् मन्त्रानपि ध्रुवम् ।
विघ्नशान्त्यै तथान्नादेः कर्मणोऽभिभवाय च ।
प्रीत्यै हरेर्देवगुरोस्तत्प्रसादाद्विमुच्यते ॥ ७३ ॥

## हंसव्यतिरिक्तानामर्घ्यादि ।

हंसाद्यो यतिरन्यश्च प्रोक्ष्याद्भिस्तत आचमेत् ।
मनुना च ततः प्रोक्ष्य दद्यादञ्जलिमञ्जसा ॥ ७४ ॥
सव्याहृत्या तु सावित्र्या सप्तव्याहृतिपूर्वया ।
त्रिशोऽन्ते मनुनावृत्त्या विष्ण्वादींश्च प्रतर्पयेत् ॥ ७५ ॥

## गायत्रीजपः ।

ततो जपेच्च सावित्रीं तिष्ठन्नेवोदयाद्रवेः ।
अष्टोत्तरं सहस्रं वा शतं वोदयतः परम् ॥ ७६ ॥

## गृहस्थादीनां दिगुपस्थानम् ।

निषीदेद्वा ततस्तिष्ठन्नादित्यमुपतिष्ठते ।
अभिवन्द्य ततो दिक्पान् तथा सर्वांश्च देवताः ।
परिवृत्य ततो देवं नाम्ना समभिवादयेत् ॥ ७७ ॥

## यतीनां दिगुपस्थाननिषेधः ।

हंसादीनां यतीनां तु नाभिवादनमिष्यते ।

प्रणमेच्च ततः सम्यगुपविश्य जपेन्मनुम् ॥ ७८ ॥

## अष्टाक्षरादिजपः ।

ततस्त्रिगुणमष्टार्ण(ङ्ग) मन्यमन्त्रांश्च सञ्जपेत् ।
मोक्षदान् कामदांश्चापि यथाकामं तु वैष्णवान् ।
हरिं नमेत्ततो देवान् परिवारान् हरेः प्रियान् ॥ ७९ ॥

## शास्त्रश्रवणव्याख्यादि ।

कुर्यात्तु परविद्याया व्याख्यां श्रृण्वीत वाथ ताम् ।
अथवा वेदशिरसां भाष्याणां भारतादिनाम् ॥ ८० ॥
वैष्णवानां निर्णयत्वात् पूर्वोक्तानां विशेषतः ।
ब्रह्मचारी ह्यधीयात्तु दैवतोऽशक्यता यदि ॥ ८१ ॥
श्रृण्वीत परविद्यां वा नान्यत्किञ्चित्समाचरेत् ।
ईक्ष्य(क्ष्या) सन्धिं हरिं चाद्यं गुरुं स्वगुरुमेव च ॥ ८२ ॥
द्विचतुर्विंशदथ वा चतुर्विंशत्तदर्धकम् ।
नमेदेताननतोर्ध्वं वा तदर्धं सर्वथा नमेत् ॥ ८३ ॥

## शान्तिपाठप्रकारः ।

शिष्यो गुरुश्च भूमो हि पादौ स्थाप्य समारभेत् ।
जान्वोरन्तस्थबाहुभ्यां सङ्गृह्य ग्रन्थमञ्जसा ॥ ८४ ॥
स्थितं कवळिकादौ हि तथान्तेऽप्येवमेव हि ।
श्रृण्वीत क्षिप्रमेवाथ मध्याह्नेऽप्येवमेव हि ॥ ८५ ॥

## कलशपूजाविधानम् ।

मण्डले तण्डुलान् शुद्धान् व्रीहीणामाढकान्यसेत् ।
अष्टाक्षरविधानेन द्वादशार्णेन वा पुनः ॥ ८६ ॥
पूजयेत्केशवद्यैर्वा प्रतिमासन्निधानवित् ।
वामे दिव्योदभृत्कुम्भं गन्धपुष्पाक्षतादिकम् ॥ ८७ ॥

तस्मिंस्तु मूलमन्त्रेण शशिबिम्बं करे न्यसेत्।
गृहीत्वा तन्मुखं विष्णुं स्मरेदष्टाक्षरं जपेत्॥ ८८ ॥

## शङ्खपूजा।

शङ्खं च पूरयेत्तोयैर्जपेदेतेषु कुम्भवत्।
शङ्खं चाद्यादिपात्रेषु कुम्भतोयं विनिक्षिपेत्॥ ८९ ॥

## पाद्यादिपात्राणि।

सादयेदात्मनो दक्षे पाद्यदीन् गन्धपुष्पकैः।
दूर्वा च विष्णुपर्णा च श्यामका कन्दमेव च॥ ९० ॥
एतानि पाद्यपात्राणि कुशाग्रतिलसर्पिषा।
यवगन्धाक्षतान् पूर्वफलं चार्घ्याय कल्पयेत्।
लवङ्गजातिकक्कोलद्रव्याण्याचमनीयके॥ ९१ ॥

## पीठपूजाविधिः।

मध्ये नारायणं देवं पूजयेद्वामतो गुरून्।
दक्षिणे देवताः सर्वा गूरुभ्यः पूर्वपूर्ववत्॥ ९२ ॥
मूलगुरुं सर्वगुरुमनुज्ञाभक्तिपूर्वकम्।
आशपेभ्योऽग्निकोणेभ्यो गरुडं व्यासमेव च॥ ९३ ॥
दुर्गां सरस्वतीं मध्ये परमं पुरुषं यजेत्।
आग्नेयादिषु कोणेषु दिक्षु धर्मादिकान्यसेत्॥ ९४ ॥
धर्मादयः पादरूपा पीठस्य फलकाः परे।
परं ब्रह्मैव मध्ये वै क्रमादुत्तरमुत्तरम्॥ ९५ ॥
आधारशक्तिं कूर्मं चाप्यनन्तं पृथिवीं तथा।
कन्दं नाळं तथा पद्मं क्षीरसागरमेव च॥ ९६ ॥
श्वेतद्वीपो मण्टपश्च दिव्यरत्नमयं शुभम्।
पद्मं तन्मध्यतः पूज्यं सतारं मण्डलत्रयम्॥ ९७ ॥

गुणत्रयात्मिका श्रीश्च तथात्मादिचतुष्टयम् ।
विमलाद्या अष्टदिक्षु पुरुषश्चेति शक्तयः ।
मध्येऽनन्तं योगपीठस्वरूपं मूलमन्त्रतः ॥ ९८ ॥

## स्वार्थपरार्थावाहनम् ।

आवाहयेद्धरिं तस्मिन्नादित्याच्चात्मनो यथा ।
आदित्यात् स्यात्परार्थे तु स्वयमर्थे तथात्मनः ।
स्वागतं परया भक्तया ततोऽर्घ्याद्यैः प्रपूजयेत् ॥ ९९ ॥

## आवरणपूजा ।

श्रियं वामे भुवं दक्षे तन्मुखन्यस्तलोचने ।
हृदयादींस्तथेन्द्रादीन् दिक्ष्वस्त्रं कोणकेषु च ।
आत्मादीन्वासुदेवादीन् दिक्षु केशवपूर्वकान् ॥ १०० ॥
यथायोग्यस्थितान् दिक्षु मत्स्यादींश्च तथैव हि ।
सानन्तं विश्वरूपं स्याच्छङ्खपद्मनिधी यजेत् ॥ १०१ ॥
दक्षे वामे ध्वजं पृष्ठे पुरतो गरुडं हरेः ।
शङ्खचक्रगदाब्जानि यजेद्दिक्ष्वायुधानि च ॥ १०२ ॥
अनन्तब्रह्मवाय्वीशान् दिक्षु वीशं तथाग्रतः ।
वारुणीं चैव गायत्रीं भारतीं गिरिजामपि ॥ १०३ ॥
कोणेषु वीन्द्रवामे च सौपर्णीं पूजयेदपि ।
इन्द्रादीन् शेषविध्यन्तान् सभार्यान् सपरिग्रहान् ॥ १०४ ॥
अनन्तं वरुणस्यापि निरृतेर्मध्यतो यजेत् ।
इन्द्रेशानयोर्मध्ये ब्रह्माणं वै प्रपूजयेत् ॥ १०५ ॥
सर्वानभिमुखान्विष्णोः कृताञ्जलिपुटान्यजेत् ।
पाद्यादिकत्रयं दत्वा धूपदीपं च दापयेत् ॥ १०६ ॥

## धूपदीपौ ।

अगरुश्चन्दनोशीरे धूपे साज्यः सगुग्गुळः ।
चन्दनागरुकर्पूरैश्चूर्णं कार्यं समध्यगम् ॥ १०७ ॥
कृत्वा वर्तीस्तु बलिना घृताभ्यक्ताः प्रदीपयेत् ।
कार्पासमक्षक्षौमं च शाल्मलीक्षीरकोद्भवम् ।
सम्भोगं कांस्यकं चैव दीपमष्टाङ्गमुच्यते ॥ १०८ ॥

## नैवेद्यम् ।

नैवेद्यं पायसाद्यं स्यान्नानाभक्षसमन्वितम् ।
हविष्यं घृतपक्वं च फलानि विविधानि च ।
अभ्युक्ष्य मूलमन्त्रेण तान्यालभ्य वसञ्जपेत् ॥ १०९ ॥

## अनुयागविधिः ।

समर्प्योक्तप्रकारेण तथाग्नौ जुहुयात्सुधीः ।
संक्षेपात्तद्विधिं वक्ष्ये वायव्ये वाग्निकोणके ॥ ११० ॥
उपलिप्य शुचौ देशे कुण्डे वा स्थण्डिलेऽपि वा ।
संकृत्य विधिवद्भूमौ समादध्याद्धुताशनम् ॥ १११ ॥
त्रीणि काष्ठान्युपादाय निदध्याद्द्रव्यदेवताः ।
स्मरन् परिसमूह्याय परिस्तीर्य ततो क्षिपेत् ॥ ११२ ॥
पात्राण्यासाद्य सम्प्रोक्ष्य संस्कृत्याज्यं यथोक्तवत् ।
गर्भाधानादिसंस्कारान् कुर्यादग्नेः पृथक्पृथक् ॥ ११३ ॥
व्याहृतीभिर्यथाज्येन कुर्यात्पुर्णाहुतीः सुधीः ।
गर्भाधानं सबः पुंसः सीमन्तो वैष्णवो बलिः ॥ ११४ ॥
जातकं नाम निष्क्रामोऽन्नप्राशं चौलकर्म च ।
उपनीतिर्महानाम्नी महाव्रतमतः परम् ॥ ११५ ॥

उपनिषदश्च गोदानं समावर्त्यमतः परम् ।
विवाहश्चैवमित्याद्याः कुर्यात् षोडशभिः क्रमात् ॥ ११६ ॥
पूजयित्वा हरिं वह्नाविध्माघाराज्यभागकान् ।
चतुश्चतुः पीठदेवमानं सपरिवारकम् ॥ ११७ ॥
हुत्वा प्रधानहवनं चतुर्लोकाग्निना कृतम् ।
पूर्णाहुतिः प्रतिहुतं वषट्कारावसानया ॥ ११८ ॥
जुहुयाद्विष्णुगायत्र्या समिधादिचतुर्ष्वपि ।
ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥ ११९ ॥

## धूपदीपनीराजनानि ।

ताम्बूलं च सकर्पूरं धूपदीपौ च पूर्ववत् ।
नीराजनमथो दत्वा पुनः पूर्ववदर्चयेत् ॥ १२० ॥
जितमित्यादिमन्त्रेण प्रदक्षिणनतिस्तुतीः ।
कृत्वा तु चतुरावृत्त्या ततो देवं क्षमापयेत् ॥ १२१ ॥

## पूजाप्रमाणानि ।

कृत्वा स्नानादि पूजां च हरेः कुर्यात्समाहितः ।
प्राङ्मुखस्तूपविष्टः सन्ननुज्ञातो हरेर्गुरोः ॥ १२२ ॥
हृदि स्थितं हरिं स्मृत्वा प्राणानायम्य च न्यसेत् ।
पञ्चाङ्गमर्चयेत्सम्यग्देवं सपरिवारकम् ॥ १२३ ॥
यथाक्रमेण मोक्षाय सर्वदेवैः समन्वितम् ।
यथाक्रमेणार्चितव्यो देवदेवो जगद्गुरुः ॥ १२४ ॥

## मोक्षसाधनकथनम् ।

प्रवृत्तोक्तं भगवता भाष्यकारेण चोद्धृतम् ।
तत्रोक्तमखिलं कार्यं मोक्षेप्सोः पुरुषस्य हि ॥ १२५ ॥
हरिभक्तिः क्रमेणैव तदीयेषु हरिस्मृतिः ।

हरिस्मृतिस्तत्स्मृतिश्च तत्स्तुतिर्हरिपूजनम्॥ १२६ ॥

तत्पूजा विहितात्याग इति मुक्तेः क्रमेण हि।

नियमात्साधनान्येव नित्यसाध्यानि चाखिलैः॥ १२७ ॥

## अन्ननैवेद्याभावे विशेषः।

पूजाकाले तु नैवेद्यं नो चेत्पुष्पादिनैव तु।

कल्पनीयं तथा चोक्तं हरिणैवार्जुनाय वै॥ १२८ ॥

पत्रं पुष्पं फलं तोयं यो मे भक्तया प्रयच्छति।

तदहं भक्तयुपहृतमश्नामि प्रयतात्मनः॥ १२९ ॥

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।

यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥ १३० ॥

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः।

नैवेद्यं नास्ति चेद्धूपदीपौ नैव प्रदीपताम्॥ १३१ ॥

## भिक्षुकाणां माधुकरी वृत्तिः।

अथ देवोपहारार्थं गच्छन्माधूकरादिकम्।

मधूकरस्य योग्याश्च स्मृता व्यासेन धीमता।

भैक्षे च बहुधा प्रोक्तं तस्यामेव स्मृतौ स्वयम्॥ १३२ ॥

## षड् भिक्षुकाः।

अध्वगः क्षीणवृत्तिश्च विद्यार्थी गुरुपोषकः।

ब्रह्मचारी यतिश्चैव षडेते भिक्षुकाः स्मृताः॥ १३३ ॥

## पञ्चविधभिक्षाः।

माधूकरमसङ्कल्पं प्राक्प्रणीतमयाचितम्।

तात्कालिकं चोपपन्नं भैक्षं पञ्चविधं स्मृतम्॥ १३४ ॥

## भोजनम्।

ततो देवस्य दत्वा तत्सर्वं देवाभ्यनुज्ञया।
भुञ्जीत तत्प्रसादान्नं यावता कर्म लुप्यते।
अदत्वा विष्णवे किञ्चिन्नैव भुञ्जीत किञ्चन ॥ १३५ ॥

## भगवन्नैवेद्यमाहात्म्यम्।

नैवेद्यभोजने श्रेयः सर्वेषां च तदावदत्।
भगवान् व्यासरूपी तु कर्मालेपाय वै सताम् ॥ १३६ ॥
भुक्त्वान्यदेवनैवेद्यं द्विजश्चान्द्रायणं चरेत्।
भुक्त्वा केशवनैवेद्यं कोटिकोट्यैन्दवं फलम् ॥ १३७ ॥
ब्रह्मचारिगृहस्थैश्च वानप्रस्थैश्च भिक्षुभिः।
विष्णोर्नैवेद्यं भोक्तव्यं नात्र कार्या विचारणा ॥ १३८ ॥
नैवेद्यमुदरे यस्य मुखे नाम हरेस्तथा।
पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः ॥ १३९ ॥

## विष्ण्वनर्पितभोजने दोषः।

विष्णोरदत्वा भोक्तुर्हि दोषमाह जनार्दनः।
क्रोडरूपो निषादस्य तत्सुताश्व(श्च) शुरस्य च ॥ १४० ॥

## ब्रह्मपारस्तवमहिमा।

संवादमुक्त्वा लोकेऽस्मिन् सतां तापप्रशान्तये।
राज्ञा कृता ब्रह्महत्या परब्रह्मस्तवेन तु ॥ १४१ ॥
स्तुते हरौ निर्गतास्य क्षणाद्देहान्महात्मनः।
स्तोत्रस्य तस्य माहात्म्यात्तथा राज्ञो वरेण च ॥ १४२ ॥
व्याधत्वे च सुधर्मज्ञो बभूव च तथाकरोत्।
सोऽमावास्यां तथा पुत्र्याः श्व(च) शुरस्य गृहं प्रति ॥ १४३ ॥

## व्याधश्वशुरसंवादः।

गत्वा तमब्रवीद्धिंसा त्वया न क्रियते किल।

जीवानां तन्मयेहाद्य चागतं हिंसया विना ॥ १४४ ॥

भोक्तुमुक्त्वेत्यथोऽ(यथा) पृच्छदस्ति हिंसां विना परम्।

यत्किञ्चिदिति तेनोऽक्तो व्रीहींस्त्वस्य त्वदर्शयत्॥ १४५ ॥

व्रीहिस्थजीवहिंसायाः प्राप्यत्वात्तेन धिक्कृते।

पुनरन्यां स्तुवन्यान्वै दृष्ट्वा तांस्तु ततोऽधिकम्॥ १४६ ॥

धिक्कृत्यायात्स तु व्याधः तत्पुत्र्याः श्वशुरोऽपि च।

अन्वेव गत्वा तत्सर्वमश्रृणोत्परमं शुभम्॥ १४७ ॥

इदं सर्वं हरेर्ब्रह्मा पूजार्थमसृजत्प्रभुः।

सृष्ट्वा सर्वं हरेर्ब्रह्मा पूजां च चक्लृपे स्वयम्॥ १४८ ॥

तथैव चक्लृपेऽन्येषां ततस्तेषां च भोजनम्।

तद्दातव्यं हरेः सम्यगन्यथा पापमाप्नुयात्॥ १४९ ॥

अहमेकं मृगं हत्वा चार्पयामि हरेः प्रभोः।

ततोऽतिथिस्वकीयैश्च (कैश्चैव) भोक्ष्यामीति तदीरितम्॥ १५० ॥

श्रुत्वा तथैव कृत्वा च विष्णुलोकमवाप्तवान्।

इत्यादि च तथान्यत्र स्मृतावपि हि विद्यते ॥ १५१ ॥

## भगवन्निवेदितभोजने प्रमाणान्तरम्।

प्राणानां जुहुयादन्नं मन्निवेदितमुत्तमम्।

तृप्यन्ति सर्वदा प्राणा मन्निवेदितभक्षणे ॥ १५२ ॥

ममापि हृदयस्थस्य पितृणां च द्विजातिनाम्।

सदा प्रीतिप्रदं पुण्यं मन्निवेदितभोजनम्॥ १५३ ॥

तथैव भारतेऽप्युक्तं देवदेवेन विष्णुना।

तत्र वेदविदः शान्ताः सप्त चित्रशिखण्डिनः ॥ १५४ ॥

प्रापणं भगवद्भुक्तं भुञ्जने चाग्र्यभोजनम्।

तस्मात्सर्वे (सर्वे देवा) विष्णुनात्तमश्नन्ति विष्णुना घ्रातं जिघ्रन्ति।

विष्णुना दृष्टं पश्यन्ति विष्णुना श्रुतं श्रृण्वन्ति ।
तस्माद्विद्वांसो विष्णूपहृतं भक्षयेत् ।
अब्रवीदेवमेवापि महोपनिषदादरात् ॥ १५५ ॥

## प्राणाग्निहोत्रम् ।

यतेः परमहंसस्य भिक्षाया एकवर्णतः ।
पर्युक्षणोक्षणे स्यातां तेनैवाथोऽष्टशो (तेनैवाथोऽष्टादशो) जपेत् ।
सङ्गृह्य भोज्यं चाचामेत्तथैवाहुतयः स्मृताः ॥ १५६ ॥

## प्राणाद्याहुतावङ्गुलिव्यवस्था ।

षड्वा पञ्च हरिः प्रोक्तः प्राणादिमनुभिः स्वयम् ।
सर्वथा न स्पृशेदन्नं जुषध्वं वचनात्पुरा ॥ १५७ ॥
मध्यमाभ्यां भवेन्मध्यतर्जनीभ्यां तथैव च ।
कनिष्ठोपकनिष्ठाभ्यां योगोऽङ्गुष्ठस्य सर्वशः ॥ १५८ ॥
तर्जनीयुतमध्याभ्यां सर्वाभिस्त्वाहुतिक्रिया ।
ततश्चाङ्गुष्ठमध्याभिः सर्वाभिर्वा यजेद्धरिम् ॥ १५९ ॥
हृदिस्थं न तले स्पृश्याद्धविरस्यान्न पातयेत् ।
होमवत्पृथिवीस्थं च दक्षपादं तु संस्पृशेत् ॥ १६० ॥

## भोजनान्ते हस्तादिक्षालनम् ।

सव्येनैव तथाचम्य हस्तं प्रक्षाल्य च त्रिशः ।
संशोध्य चाम्बुना चास्यं धावनं च दतां भवेत् ॥ १६१ ॥
उदेन भूयो नवशस्तत आचमनं चरेत् ।
उद्धृत्य पात्रं लिप्ते तु स्मृत्वा विष्णुं ततो व्रजेत् ॥ १६२ ॥

## उपस्थानं तर्पणं च ।

मध्याह्ने निष्क्रियादन्ययन्यादीनां भवेत्सदा ।
उपस्थानं तु सर्वेषां विष्ण्वाद्यं देवतर्पणम् ॥ १६३ ॥

आर्षं च पैतृकं चापि यत्यन्येषां विधीयते ।
स्वाध्यायोऽप्यग्निकार्यं तु ब्रह्मचारिण एव हि ॥ १६४ ॥

## वैश्वदेवविशेषः ।

वनिनां वैश्वदेवं तु वन्यैर्द्रव्यैर्विधीयते ।
गृहिणो वैश्वदेवं तु ग्राम्यैरन्नैर्विधीयते ॥ १६५ ॥
देवर्षिपितृभूतानामतिथीनां च सर्वशः ।
वनस्थगृहिणोर्यज्ञः सर्वथा हि विधीयते ॥ १६६ ॥

## सन्यासिप्राणाहुतिः ।

अन्नाभिमर्शनो मन्त्रः सर्वेषां निष्क्रियं विना ।
प्राणादिमन्त्रा होमे च परमात्मयुताः सदा ॥ १६७ ॥
प्राणाग्निहोत्रविषये विशेषोऽस्ति सदातनः ।
नवक्षेत्रोपदेशेन गम्यत्वाच्च सदैव हि ॥ १६८ ॥

## भोजनान्तकर्तव्यम् ।

भवेच्च पुनराचामस्ततः सर्वे हरिं परम् ।
स्मृत्वा विद्याविनोदेन कुर्युर्वै कालयापनम् ॥ १६९ ॥
अथास्तमित आदित्ये चैवमेव विधीयते ।
अनुष्ठानं प्रायशो हि न विशेषो हि निष्क्रिये ।
आश्रमाणां त्रयाणां वा अग्निकार्यादि पूर्ववत् ॥ १७० ॥

## स्वापकालः ।

विद्ययैव ह्यर्धरात्रिपर्यन्तं नैव च स्वपेत् ।
घटिकादशपर्यन्तमथ वा हरिमञ्जसा ।
स्मृत्वा निद्रां प्रकुर्वन्वै प्रबुद्धोऽतन्द्रितो मुहुः ॥ १७१ ॥

## कालसार्थक्यकरणम् ।

स्तुवीतैव रमेशं स एनं मुक्तं करिष्यति ।
एवं भवेन्नित्यकर्म न वृथा कालयापनम् ।
कुर्यात्तथापि विष्णुं च सर्वदा संस्मरेत्तथा ॥ १७२ ॥

## एकादश्युपवासः ।

एकादश्युपवासश्च सर्वेषां सर्वथा भवेत् ।
यत्किञ्चिच्च न भक्षेत शुभेप्सुः सर्वथा दिने ।
तस्मिंस्तु मृतिपर्यन्तं रोगाभावे पुमान् क्वचित् ॥ १७३ ॥

## विष्णुपञ्चकोपवासः ।

अमावास्यां च पूर्णायां श्रवणे चापि शक्तितः ।
उपवासो भवेत्तद्वत्संक्रान्त्यामात्मशुद्धये ॥ १७४ ॥
उत्तरायणसंक्रान्त्यामुत्तरं हि फलं भवेत् ।
दक्षिणायनसंक्रान्त्यां फलं सर्वमधो भवेत् ॥ १७५ ॥
अन्यत्रापि यथा स्कान्दे प्रोच्यते तद्वदेव तु ।
उपवासस्स विज्ञेयस्तदप्यत्र वदामि च ॥ १७६ ॥

## विष्णुपञ्चकोपवासे वेधविचारः ।

तिथयो पूर्वविद्धास्तु सर्वा वर्ज्या उपोषणे ।
उदयस्पर्शिनी वर्ज्या दर्शे सर्वत्र पण्डितैः ॥ १७७ ॥
अन्यास्तु यामसंस्पृष्टा उदयात्प्रागापि ध्रुवम् (वर्ज्यैवैकादशी तिथिः) ।
उदयानन्तरं यामव्यापिन्यो भाः प्रकीर्तिताः ॥ १७८ ॥

## श्रवणाद्युपवासः ।

मध्याह्नव्यापिनी श्रोणा सदोपोष्या विचक्षणैः ।
मुहूर्तद्वयसंस्पृष्टा वर्ज्यैवैकादशी तिथिः ॥ १७९ ॥
इति पापकुसूलत्वं प्रोच्यते वैष्णवे दिने ।
उपवासविहीनस्य तत्रतत्र च सादरात् ॥ १८० ॥

## हरिवासरः ।

एकादश्याः प्रान्तभागो द्वादश्याः पूर्व एव च ।
हरिवासरनामासौ सर्वकालोत्तमः स्मृतः ॥ १८१ ॥
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
तस्मिंस्तु भुञ्जनः पापान्येकस्थानि भवन्त्युत ॥ १८२ ॥
यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ॥ १८३ ॥

## एकादश्युपवासमाहात्म्यम् ।

रुद्रोऽपि सर्वदेवानामात्मनः सर्वदेहिनाम् ।
एकादश्युपवासे च कर्तव्यत्वेन शंसति ॥ १८४ ॥
या तिथिर्दयिता विष्णोः स तिथिर्मम वल्लभा ।
सतां नोपोषयेद्यस्तु स पापी श्वपचाधिकः ॥ १८५ ॥
स्कान्द आह तथा रुद्रो जायायै शुभकर्मणः ।
हानिस्सर्वस्य वेदे तु दशम्या यदि दूषिते ॥ १८६ ॥
शुभवृद्धिं तथा चाह तद्विनैव परे दिने ।
उपवासे तु ते वक्ष्ये तदप्यत्र शुभाय वै ।
यत्तु जन्मसहस्रेण सदा पुण्यार्जितं फलम् ॥ १८७ ॥

## विद्धैकादशीवर्जनम् ।

अरुणोदयविद्धाया उपवासाद्व्यपोहति ।
निवारितस्तु विद्वद्भिः जन्मकोटियुतं फलम् ॥ १८८ ॥
यदनादिकृतं पुण्यं परं यच्च करिष्यति ।
तत्सर्वं विलयं याति परेषामुपवासनात् ॥ १८९ ॥
एवं विद्धां परित्यज्य द्वादश्यामुपवासने ।

कोटिजन्मार्जितं पापमेकयैव विनश्यति ॥ १९० ॥

ततः कोटिगुणं वापि निषिद्धस्य च वर्जने।

यदनादिकृतं पापं तदूर्ध्वं यत्करिष्यति ॥ १९१ ॥

तत्सर्वं विलयं याति परेषामुपवासनात्।

न च तस्मात्प्रियतमः केशवस्य ममापि वा ॥ १९२ ॥

अन्यदैवतसामान्यं यदि विष्णोर्न पश्यति।

गुरून्वा नावजानाति न चैनं वेत्ति मानुषम् ॥ १९३ ॥

तस्माद्भद्रे सदा कार्यं विद्धायां वर्जनं त्वया।

प्रीत्यर्थं मम देवेशि तथा नारायणस्य च ॥ १९४ ॥

## श्रवणद्वादशी।

द्वादशीं श्रवणोपेतां नोपोष्याद्यः सुमन्दधीः।

पञ्चसंवत्सरकृतं पुण्यं तस्य विनश्यति ॥ १९५ ॥

## चातुर्मास्यव्रतारम्भः।

एकत्र वर्षास्वृतुषु शयानं स्वेच्छया हरिम्।

शेषभोगे श्रिया सार्धं विनिद्रं ज्ञानरूपिणम् ॥ १९६ ॥

करामलकवद्विश्वं पश्यन्तं सर्वदैव च।

वसेदनुव्रती धीर एकादश्यां हरिं यजेत् ॥ १९७ ॥

नारायणं तदैवाद्धा स्वीकुर्यात्सर्वथा व्रतम्।

पौर्णमास्यां निशायां तु यजेन्नारायणं प्रभुम् ॥ १९८ ॥

इन्दिरासंयुतं दन्तकाष्ठाद्यं तस्य चार्पयेत्।

प्राणिनां सम्भवात्पूर्वं मृदं चैकत्र निक्षिपेत् ॥ १९९ ॥

## चातुर्मास्ये नवीनमृद्ग्रहणादिनिषेधः।

नान्तरान्यमृदं गृह्यात्(ग्राह्यं) दन्तकाष्ठानि चापि वा।

तत्पूर्वं संस्मृते स्थाने कदाचिन्न विरुद्ध्यते ॥ २०० ॥

पटादीनां कषायं च निक्षिपेदन्तरा क्वचित् ।
न तरेच्च नदीं नेयाद्योजनार्धार्धतः परम् ।
एकत्रैव भवेद्ध्यानं शयनं च तथा सदा ॥ २०१ ॥

## चातुर्मास्यकालावधिः ।

ऋतुमेकं तथा द्वौ वा वसेदेवं समाहितः ॥ २०२ ॥

## चैत्रादिमासगणना ।

चित्रादि तारकाद्वन्द्वं यदा पूर्णेन्दुसंयुतम् ।
चैत्रादिमासा विज्ञेयाः पञ्चषण्णतमास्त्रिभिः ॥ २०३ ॥

## अधिकमाससंसर्पे ।

अधिकमासे समुत्पन्ने मासांस्त्रीन् पञ्च वा वसेत् ।
अधिमासमृते सङ्ख्या स्यादृतूनां सदापि च ॥ २०४ ॥

## संसर्पाहस्पतीमासौ ।

यस्मिन् मासि न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
संसर्पाहस्पती मासावधिमाससमौ स्मृतौ ॥ २०५ ॥

## अधिमासः ।

द्विचन्द्रप्रभवः प्रोक्तो ह्यधिमासोऽपि सूरिभिः ।
उक्तर्क्षेषु यदा पूर्णा द्वयमेव भविष्यति ॥ २०६ ॥
तदाधिमासो विज्ञेयः सर्वलोकेषु गर्हितः ।
तदन्ते वपनं कृत्वा व्रजेत्तस्माच्च तद्दिने ॥ २०७ ॥

## क्षौरदिनम् ।

यतिः सर्वोऽपि पूर्णायां क्षौरं कुर्यादृतुं प्रति ।
पौर्णमास्यामशक्तश्चेत्कुर्यादेव परे दिने ।
यदि तत्रापि पञ्चम्याः पूर्वमेव तु सर्वथा ॥ २०८ ॥

## कृष्णाष्टमीव्रतम् ।

सिंहमासे तु रोहिण्या युतां कृष्णाष्टमीं पुमान् ।
उपोष्य मध्यरात्रे च पूजयेन्नन्दनन्दनम् ।। २०९ ।।
यशोदासंयुतं तल्पे शयानं तु चतुर्भुजम् ।
शङ्खचक्रगदापद्मधरं ज्ञानस्वरूपिणम् ।। २१० ।।
क्षीरपायसमध्वाद्यैर्नवनीतयुतैस्तथा ।
अपूपकादलाद्यैश्च मातुलङ्गसितादिभिः ।। २११ ।।
सुमनोभिस्तुलस्यादिदशभिर्गन्धसंयुतैः ।
अर्चयित्वा परेद्युश्च प्रातरेवाथ पूजयेत् ।। २१२ ।।

## नवरात्र्यां व्यासपूजा ।

एवं भाद्रपदे मासे नवम्यां सितपक्षके ।
ग्रन्थानेकत्र संस्थाप्य वस्त्रैः सञ्छाद्य सर्वशः ।। २१३ ।।
व्यासं परशुरामं च पूजयेत्तेषु भक्तितः ।
द्वाविंशभेन यद्युक्ता उपवासो विधीयते ।। २१४ ।।
बादरिं जैमिनिं चैव सुमन्तुं वैशम्पायनम् ।
आश्मरथ्यं च पैलं च काशकृत्स्नं च लोमशम् ।। २१५ ।।
पुरैतान् लोकपालेभ्यो यजेद्व्यासस्य शिष्यकान् ।
प्रतिमायां चैवमेव यजेदेते हरेस्तनू ।
यजनं परिवाराणामेकदा वा भवेद्द्वयोः ।। २१६ ।।

## भगवत्प्रार्थनम् ।

विद्या भक्तिं गुरौ विष्णौ तयोरात्मन्यनुग्रहम् ।
वृण्वीत परमार्चा (वरमर्चा) तु प्रातरप्येवमिष्यते ।। २१७ ।।
एवं हरिं पुमानर्च्य (तु नानार्चा) सुनित्यानित्ययोगतः ।

अनूचानो वैष्णवानां ग्रन्थानां प्रीणयेद्धरिम् ॥ २१८ ॥
विद्यादानेन भक्तया च पूजाध्यानजपैः सदा ।
मतिस्तुतिभ्यां कृष्णोऽस्य सुप्रीतो मुक्तिदो भवेत् ॥ २१९ ॥

## शिष्यस्य अभिषेकप्रकारः ।

श्रुतग्रन्थमृजुं सौम्यं प्रवीणं निष्क्रियं यतिम् ।
योगपट्टेन नाम्ना वै युक्तं कुर्याद्गुरुर्महान् ॥ २२० ॥
शुभे दिने प्रातरेव व्यासरूपं हरिं यजेत् ।
पूर्वोक्तेन विधानेन नैवेद्यं पायसादिकम् ॥ २२१ ॥
दत्वा पूज्य पुनर्मन्त्री शिष्यं चात्र हरेरुप ।
स्नातं यथावदाचान्तं प्राङ्मुखं चोपवेश्य च ॥ २२२ ॥
शङ्खोदेनैव सम्प्रोक्ष्य कृत्वा चाथाभिषेकिणम् ।
पाराशर्यस्य मनुना व्यासं तद्धृदये यजेत् ॥ २२३ ॥
यथापूर्वं ततस्तस्य तीर्थयुक्तं भवेदथ ।
सर्वशुद्धिकरत्वात्तु तीर्थाख्यो विष्णुरुच्यते ॥ २२४ ॥
तत्तन्नामाख्यतीर्थेन हरिणा संयुतस्त्विति ।
अनेन हरिणा चायं तीर्थभूत इतीरितः ॥ २२५ ॥
अर्थस्तथान्यनाम्नोऽपि तत्तज्ज्ञानीति वा भवेत् ।
योगपट्टं प्रदातव्यं व्याख्यालिङ्गं तथास्ति चेत् ॥ २२६ ॥

## व्याख्यानप्रकारः ।

अथ व्याख्यां सदा कुर्यात् सच्छिष्याणां सदा स च ।
उत्तमत्वस्य सर्वस्माद्गुणपूर्तेस्तथैव च ॥ २२७ ॥
दोषायुक्तस्य च हरेरविरोधे न बुद्धिमान् ।
ब्रह्मादितारतम्यस्य यथा रोधो न जायते ।
महातात्पर्यमेतद्धि तस्मादेवं वदेद्बुधः ॥ २२८ ॥

## यतिनियमः ।

भूतं किमपि न द्रुह्यान्न वदेत्परुषं वचः ।
किञ्चिच्च नापि क्रुद्ध्येत जपकाले तु देवताम् ।
विना नान्यं चिन्तयीत चिन्तिते निष्फलं भवेत् ॥ २२९ ॥

## यतिनिषिद्धानि ।

पतितान्नं न भुञ्जीत द्विषदन्नं तथैव च ।
लशुनं गृञ्जनं चैव कोविदारपलाण्डुके ॥ २३० ॥
करञ्जोदुम्बरालाबून् बृहन्निष्पावमेव च ।
न भुञ्जेद्यदि भुञ्जीत प्रायश्चित्तीयते द्विजः ॥ २३१ ॥
श्वेतवृन्ताकतैले च हिङ्गुं चैव मसूरिकाम् ।
निष्पावमाढकीं चैव कुलस्थं नैव भक्षयेत् ॥ २३२ ॥
यातयामं गतरसं पूतिपर्युषितं च यत् ।
केशजं तु स्वेदजु(दु) ष्टं भूयः पक्वमसंस्कृतम् ॥ २३३ ॥
आक्रान्तं च तथोच्छिष्टं परस्य स्वस्य वापि वा ।
रसत्वेनान्यथा जातं शरीरापथ्यदानि च ।
न भुञ्जीत तथा कांस्ये यत्यादौ वर्जयेन्मधु ॥ २३४ ॥
सव्यहस्तेन नैवाद्यादुभाभ्यां च तथैव ह ।
तिष्ठन् शयानो नैवाद्याद्गच्छन्नशुचिरेव च ॥ २३५ ॥
सन्ध्याकालेषु च त्रिषु नैवाद्यात्कश्चन क्वचित् ।
इत्याद्यास्तु यदाचाराः ज्ञेयाः क्लृप्तास्तु विष्णुना ॥ २३६ ॥

## सदाचारकथनम् ।

कार्यास्तु सर्वदा सद्भिः महद्भिर्यदुदाहृतम् ।
कार्यं तदेव चीर्णं न कार्यं धर्मबहुत्वतः ॥ २३७ ॥

देशतः कालतश्चैव पुरुषादापदस्तथा ।
सर्वैर्धर्मस्य वेत्तुस्तदशक्यत्वान्न कार्यता ॥ २३८ ॥
तस्य तस्मान्महत्प्रोक्तमाचारं सर्वदाचरेत् ।
वयं तु महतां पादपांस्वनुग्रहयोगिनः ॥ २३९ ॥
नारायणाय सततं विधिशर्वशक्ररव्यादिभिः सुरगुणैर्मनुजैश्च नित्यम् ।
सद्भिर्मुनीन्द्रकगणैर्हरिकर्मसंस्थैः संसेव्यमानचरणाय नतिं करोमि ॥ २४० ॥

॥इति श्रीमद्विष्णुतीर्थीयसन्यासपद्धतौ आचारकथनं नाम तृतीयाऽध्यायः ॥
श्रीकृष्णार्पणमस्तु ॥

॥चतुर्थोऽध्यायः ॥

अजादिदेवैः सुरगायकैश्च मुनीन्द्रयुक्तैर्मनुजैः सवर्णैः ।
व्रतादिभिस्त्वाश्रमसंयुतैश्च संपूज्यमा(चा) प्यं सुखदं च वन्दे ॥ १ ॥

## सन्यासग्रहणकालनिर्णयः ।

अर्चन् सदैवं परमं गृहस्थः सुते युते प्रियया प्रव्रजेच्च ।
विरक्तश्चेदन्यथा वापि गच्छेद्विष्णोः क्षेत्रं व्याधिपीडादिहीनम् ॥ २ ॥

## अशक्तविषयकथनम् ।

अशक्तश्चेद्यदि गन्तुं गृहस्थो वीतस्नेहो नित्यमर्च्याद्धरिं सः ।
काले मृतेः सर्व ए(मे) वापि विष्णोः क्षेत्रे गृहे वापि तदन्यदेशे ॥ ३ ॥
स्नात्वाचम्याथोपविश्याथ पीठे यथायोग्ये सच्चिदानन्दरूपे ।
आत्मोपेते विषयेभ्यो मतिं स्वां हृत्वा विष्णौ निश्चलां धारयेच्च ॥ ४ ॥

## ध्येयविष्णुस्वरूपकथनम् ।

उत्क्रान्तिकाले हृदिपङ्कजेऽथ स्वमूर्तिमध्यस्थहरिं च देवैः ।
ब्रह्मादिभिः पार्श्वगभूरमाभ्यां युतं सदात्मानमवेक्ष्यमाणैः ॥ ५ ॥
नखेन्दुसंशोभिमणिप्रवेकयुताङ्गुलीभिर्विलसत्पदेन ।
तलेन रक्तेन च संयुतेन ब्रह्मादिभिः पूज्यतमेन नित्यम् ॥ ६ ॥

सुवृत्तजानुद्वयसंवृतेन पीनोरुयुग्येन च संयुतं तम् ।
कट्या च कांच्या परिरम्भितेन पीताम्बरेणावृतया समेतम् ॥ ७ ॥
नाभिह्रदेनापि सुवृत्तकेन पाणोरिवाविष्टमहाण्डकेन ।
तुन्देन लोकार्तिहरेण चैव विज्ञानबुद्ध्यादिहृदा च युक्तम् ॥ ८ ॥
वनाख्यमालायुतहारकेण देदीप्यमानेन परार्घ्यकेन ।
श्रीवत्सभूत्या च सदा युतेन युतं चकासत्पृथुतुङ्गवक्षसा ॥ ९ ॥
रमाधराभ्यामथ पार्श्वगाभ्यामङ्कश्रिताभ्यां वरवेषयुग्भ्याम् ।
पीनेन पृष्ठेन सुविस्तृतेन मण्युत्तमालङ्कृतमध्यरज्वा ॥ १० ॥
रत्नाढ्यचैत्यात्मककौस्तुभेन विलासिकण्ठेन तथान्यनिष्कैः ।
निकृत्तदेवारिशिरोरिणा च सहस्रभानोरिव दीपितेन ॥ ११ ॥
हरेर्मुखाप्तातिरवेण दैत्यविभीषकेणापि च मारकेण ।
क्षीरोपमेनाथ दरेण नित्यं सुरारिरक्ताङ्कितधारया सदा ॥ १२ ॥
अयोमयीगदयानद्धकोट्या जाम्बूनदेनापि वराम्बुजेन ।
उन्मीलिताम्लानसुशोभिलीलासुकम्पितेनापि करेषुयुक्तम् ॥ १३ ॥
मुखाम्बुजेनापि सुगण्डकेन चलत्सुनिर्भातसुकुण्डलेन ।
स्मिताढ्यरक्तोष्ठविभानतोऽञ्जशशोणायिताग्र्यद्विजपङ्क्तिना च ॥ १४ ॥
उदारनासेन तथाब्जनेत्रद्वयेन दीर्घेण सुचञ्चलेन ।
कटाक्षमात्रेण विरिञ्चशर्वशक्रादिकैश्वर्यविधायकेन ॥ १५ ॥
नानामणिव्रातसुलोचनाढ्यकिरीटनिष्केण युतं सुरोत्तमम् ।
महाविभूषादिविभूषणाङ्गं परं पदं वैष्णवमेव चिन्तयेत् ॥ १६ ॥

## मरणानन्तरभाविमार्गस्मरणम् ।

वह्नेः सुतं त्वर्चिषमेव पूर्वं तथैव वायोः सुतमातिवाहम् ।
अहस्तु पक्षं सितमेव चोदक्संवत्सरं तटितं वारि पञ्च ॥ १७ ॥
प्रजापतिं सूर्यमथापि सोमं वैश्वानरं चेन्द्रमथो ध्रुवं च ।

देवीं दिवं वायुमथो हरिं च क्रमेण मार्गानपि संस्मरेत ॥ १८ ॥

## देहादुत्क्रान्तिकथनम्।

मूलस्थवायुं शनकैर्व्रजन्तं नाभिं ततो हृदयं विष्णुनैव।
ततो हरिं चात्मसुरेशयुक्तं नाड्या तदोकोज्वलनावभासया ॥ १९ ॥
सुषुम्नया क्रमयोगेन गत्वा विधाय मूर्धानमभिव्रजन्तम्।
ध्यायेद्धरिं सुष्ठु गुरूक्तमार्गाद्रमादितूलान्तजगद्विभिन्नम् ॥ २० ॥

## गृहस्थस्य मरणकाले कर्तव्यकथनम्।

तथैव चाग्नित्रयसंयुतोऽपि न्यस्तुं न शक्तो यदि वेदिमध्ये।
आस्तीर्य दर्भानपि चैकमेव निरस्य तेषूपविशेच्च मन्त्रात् ॥ २१ ॥
स च न्यसिष्णुर्जुहुयाच्च जुह्वा पूर्णाहुतिं त्वृत्विजा वेदिमध्ये।
विश्याथ जाग्रत्परतो दिनादाविष्टिं प्रकुर्यात्परमं स्मरन्सः ॥ २२ ॥
वैश्वानरोऽजीजनदेव पृष्ठो दिवीति पूर्वत्र पुरोऽनुयाज्ये।
प्रजापतेनेति तवेम इष्टिं अन्तेऽग्निमावाहयति स्व आत्मन् ॥ २३ ॥
तथैव चौपासनवह्निनैव युक्तोऽपि वह्नेर्जघने निवेश्य।
अन्योऽपि चैवं यदि नैव शक्यं स्थातुं गृहान्कश्चन संस्मरेत्तम् ॥ २४ ॥

## भगवज्ज्ञानादेव मोक्षकथनम्।

ये ये हरिं सर्वजगद्वरिष्ठं सुपूर्णविज्ञानसुखैकरूपम्।
व्यासोक्तसूत्रेषु यथैव वेदशिरस्सु शास्त्रे च सुतत्ववादे ॥ २५ ॥
सभारते पञ्चरात्रे यथैव निगद्यते तं परमं तथैव।
ज्ञात्वा तमर्चन्ति तमाप्नुयुस्ते नैवान्यमार्गेण परः स वेद्यः ॥ २६ ॥
यथैव चाहुः परमं तु वेदाः सूत्राण्यथो पञ्चरात्राणि चैव।
पुराणयुक्तानि तु भारतानि तथैव सम्यग्घि विवेचयिष्यन् ॥ २७ ॥

## भाष्यकारकृतग्रन्थकथनम्।

ऋचां तु भाष्यं स चकार सम्यक्तथारणानां वरसूत्रकाणाम्।

सारं च तन्त्रस्य च भारतस्य संक्षेपमानन्दयुताम्बुसंज्ञः॥ २८ ॥
यथैव यद्वस्तु तथैव चोक्ते तत्तत्त्ववादोऽखिल एव पुंसाम्।
ज्ञेयश्च कार्यः परमादरेण संसाराब्धेस्तर्तुमत्यन्तदुःखात्।
निष्क्रम्य देहात्स पुरोदितेन पथा हरिं प्राप्य सुखं रमेच्च॥ २९ ॥

## गृहस्थादिदेहदहनकथनम्।

ततो विना यतिदेहं दहेयुस्तदीयका मन्त्रपुरस्सरा वै॥ ३० ॥

## यतिदेहस्य वृन्दावनकरणकथनम्।

देहं यतेः शिष्यवराः सुशुद्धाः स्नातास्ते तं स्नापयित्वा हरेस्तु।
पादोदकेनैव च वासयेयुः कौपीनमन्यच्च तथैव वस्त्रम्॥ ३१ ॥
पूर्वोक्तमार्गेण च गोपिकां च लिप्त्वा तुलस्यादिसुपुष्पकाणि।
धृतानि कृष्णेन च धारयेयुर्वस्त्रेण सञ्छाद्य च सञ्जपेयुः॥ ३२ ॥
सूक्तं हरेः पौरुषमेव सर्वे ततो नयेयुर्जलधेश्च तीरम्।
शिक्ये तु पीठं सुदृढं निधाय योगारूढं तत्र संवेशयेयुः॥ ३३ ॥
भेरीमृदङ्गादिरवेण युक्ताः सूक्तानि विष्णोश्च सदा जपन्तः।
नीत्वा गर्तं तत्र नीचं सुखात्वा लिप्त्वा च सर्वत्र च गोमयेन॥ ३४ ॥
सम्प्रोक्ष्य सर्वत्र च पञ्चगव्यं क्षीरादिना पौरुषेणोपवेश्य।
योगारूढं प्राङ्मुखं पीठ एव जप्त्वा सूक्तं तत्त्रिशः सर्वशिष्याः॥ ३५ ॥
विदार्य मध्यं शिरसः पुरोऽस्य निधाय दण्डं च मृदा सुपूर्य।
खातं पुरा यद्यगवर्षवासस्तुषाग्निनेषत्तु दग्ध्वेव पूर्यम्॥
(खातं पवाद्यगवषवातस्तुषाग्निनैवत्तु तथैव पूर्या) ॥ ३६ ॥
अब्धेः समीपे यदि नीरतीरे नद्य(द्या) स्तथा क्षेत्रवरेऽपि वा स्यात्।
रक्षां च कृत्वाश्मसुकण्टकाद्यैः स्वकीयगेहानि च ते व्रजेयुः॥ ३७ ॥

## वृन्दावनस्थभगवत्पूजाविधानम्।

स्थिरादिकासु प्रतिमासु सम्यग्गन्धाक्षते(ष्टके) नाऽपि सुपुष्पकेण।

भक्त्या चिदानन्दरसानिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवान् ॥ ३८ ॥

## ब्राह्मणाराधनम् ।

सम्पूज्य दद्याच्च निवेद्यमेभ्यश्चतुर्विधान्नं सहषड्रसं च ।

प्रधानतः पायसमेव भूयः सम्पूज्य च ब्राह्मणान् भोजयेच्च ॥ ३९ ॥

## सन्यासिमरणे अलङ्कारिकब्राह्मणभोजनम् ।

एकैकमूर्तेः शतमेव साष्टं द्विद्वादश द्वादशार्धं ततोऽपि ।

चतुश्चतुर्द्विर्द्विरथैकमेकं यथैव शक्तिः परिपूज्य भक्तान् ॥ ४० ॥

सर्वान् हरौ दक्षिणां चैव दत्वा सम्प्रार्थयेत्प्रीयतां नामतोनु ।

इति द्विजा व्युत्क्रमतो वदेयुरेतत्तदोपोष्य परेऽहनीशम् ॥ ४१ ॥

सम्पूज्य तद्वच्चतुरोऽथवैकं सम्भोज्य विप्रांश्च तथा स्वयं च ।

भुञ्जीत पश्चात्स्वगुरुन्नमेच्च न विस्मरेतापि कदाचनामुम् ॥ ४२ ॥

## वृन्दावनकरणे फलम् ।

शिष्याभावे ग्रामजनाः प्रकुर्युरेतत्सर्वं पुण्यमवाप्यते तैः ।

महच्च तस्मात्पितृदेवा हरिश्च तुष्यन्ति तेभ्योऽधिकं चैव शिष्ये ॥ ४३ ॥

एवं यतेः कर्मसमाख्ययैव समाहारो विधिवत्सङ्ग्रहेण ।

विष्ण्वाख्यतीर्थेन कृतः सदैव ज्ञेयः परो भागवतस्सतां हि ॥ ४४ ॥

द्वीपे पयोब्धेः कृतगेहमध्ये महासभायां मणिलोचनायाम् ।

मध्ये महामञ्जगशेषभोगे शयानमाद्यं प्रणतोऽस्मि नित्यम् ॥ ४५ ॥

## अन्तिममङ्गळम् ।

वृतं तथाब्धौ पदजानुमग्नैः नृगायनाद्यैश्च सुतेर्विमुक्तैः ।

मग्नैर्गलात्पिप्पलकक्षगैश्च स्रोतो(ता) यनैर्विततस्यापि नौमि ॥ ४६ ॥

## आदघ्नासइत्यादिश्रुत्यर्थः ।

अरण्ययोस्सन्निमग्नैः पुरस्थैस्तथा सभायां मणिकाञ्चनायाम् ।

सर्वैश्चिदानन्दविबोधसारस्वरूपकैः संस्तुतं सन्नमामि ॥ ४७ ॥

बहूक्तितः किं भवेत्सर्वमुक्तैर्नृपादिविध्यन्तसुरैः सदैव ।

यथाह वेदस्सुगुणोच्चरूपैः क्रमान्नतं सर्वदा नौमि विष्णुम् ॥ ४८ ॥

अनन्तबाहूरुशिरस्सु नित्यं सौवर्णभूषास्थमणिप्रवेकैः ।

विराजमानं हि विसङ्ख्यसूर्यामितोरुदीप्तिं सततं च वन्दे ॥ ४९ ॥

आनन्दतीर्थाख्यमुनिं सुविद्यं वायुं कलौ दस्युविषेण सन्नान् ।

उज्जीवयानं हरिपादपद्मसुधारसेनैव सतो हि नौमि ॥ ५० ॥

सर्वोत्तमो विष्णुरथो रमा च ब्रह्मा च वायुश्च तदीयपन्त्यौ ।

अन्ये च देवास्सततं प्रसन्नाः हरेः सुभक्तिं मयि सन्दिशन्तु ॥ ५१ ॥

॥ श्रीः ॥

॥इति श्रीमद्विष्णुतीर्थीयसन्यासपद्धतौ उत्क्रान्तिकथनं नाम चतुर्थोऽध्यायः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

श्रीमदानन्ततीर्थार्यभ्रातरं सुतपस्विनम् ।

श्रीविष्णुतीर्थयोगीन्द्रं नौम्यहं मुक्तिहेतवे ॥ १ ॥

रूप्यपीठपुरस्थेन दासाख्येन द्विजन्मना ।

सन्यासपद्धतिग्रन्थो विष्णुतीर्थकृतः सताम् ॥ २ ॥

उपकाराय महतां मोक्षादिपुरुषार्थदः ।

लिखितोऽभीष्टदो भूयात्तेन प्रीणातु माधवः ॥ ३ ॥

॥ श्री मद्विष्णुतीर्थीया सन्यासपद्धतिः समाप्ता ॥

॥ श्रीलक्ष्मीवेङ्कटेशः प्रसीदतु ॥

॥ श्री कृष्णार्पणमस्तु ॥

॥ श्रीः ॥